म०म० गोकुलनाथोपाध्यायकृतः

# अवयवदीधितिविद्योतः

(म०म० गङ्गेशोपाध्यायकृत–न्यायतत्त्वचिन्तामणेः अनुमानखण्डस्यावयवप्रकरणं,
तद्व्याख्या म०म० रघुनाथशिरोमणिकृता दीधितिः, तद्व्याख्यानस्वरूपो विद्योतश्च।)



सम्पादकः

पं० श्रीरामसेवक झा

पूर्वविभागाध्यक्षः, दर्शनविभागे,

का०सिं० दरभङ्गा संस्कृतविश्वविद्यालये

कामेश्वरसिंहदरभङ्गा संस्कृतविश्वविद्यालयः, दरभङ्गा

म०म० गोकुलनाथोपाध्यायकृतः

# अवयवदीधितिविद्योतः

(म०म० गङ्गेशोपाध्यायकृत—न्यायतत्त्वचिन्तामणेः अनुमानखण्डस्यावयवप्रकरणं,
तद्व्याख्या म०म० रघुनाथशिरोमणिकृता दीधितिः, तद्व्याख्यानस्वरूपो विद्योतश्च।)

## AVAYAVA-DIDHITI-VIDYOTA

(A Commentry on Raghunath Shiromani's Navyanyaya work
'Didhiti' by Gokulanath Upadhyaya of Mithila)



सम्पादकः

**पं० श्रीरामसेवक झा**

पूर्वविभागाध्यक्षः, दर्शनविभागे,
का०सि० दरभङ्गा संस्कृतविश्वविद्यालये

# आमुखम्

विश्वविद्यालयीयप्राचीनपाण्डुलिपिप्रकाशनयोजनायामिदानीमेकस्यातिमहत्त्वपूर्ण–ग्रन्थस्य अवयवदीधितिविद्योतस्य प्रकाशनं जायत इति महतो हर्षस्य स्थानम्। ग्रन्थस्यास्य चिराय प्रकाशनमपेक्षमाणस्य मिथिलाक्षरमयी पाण्डुलिपिरस्माकं विश्वविद्यालये मिथिलाधीश–महाराजाधिराजकामेश्वरसिंहप्रदत्त–पाण्डुलिपीनां मध्ये विराजते। मन्ये, एतेन प्रकाशनेन संस्कृतजगद्दधीचिकल्पस्य महाराजस्य दानं सफलीभूतम्।

नव्यन्यायशास्त्रस्योत्पत्तिस्थाने मिथिलायां तच्छास्त्रविनियोगपरम्परायां म०म० गोकुलनाथोपाध्यायस्य नाम स्वर्णाक्षरैर्विद्योतते। एतद्रचितग्रन्थेषु नव्यन्यायस्य मैथिल–परम्परा जीवति, यत्र न केवलं दीधितिकारः शिरोमणिरेव समीक्षितोऽपितु यज्ञपत्युपाध्याय–पक्षधरमिश्रावप्यालोचितौ, तदनुसारं सूक्ष्मेक्षिकया चिन्तामणेराशयः स्फीततया निरूपितः।

तत्त्वचिन्तामणेरनुमानखण्डे परार्थानुमितिनिरूपणप्रसङ्गे तस्या न्यायसाध्यत्वमिति संसाध्य न्यायस्तदवयवाश्च प्रतिज्ञा–हेतूदाहरणोपनय–निगमन–स्वरूपाः पञ्चसंख्यका विवेचिताः। तस्यांशस्यैव नाम अवयवप्रकरणमिति। प्रस्तुते संस्करणे तत्त्वचिन्तामणि–दीधिति– विद्योतानां संहत्य प्रकाशनं क्रियते येन टीकाकारधृत–प्रतीकांशस्य साम्मुख्ये ग्रन्थाशयावगमे सौकर्यं भवेत्।

एतादृशगहनगम्भीरग्रन्थस्य साधुतयोपस्थापनं विधाय नैयायिकमूर्धन्याः पण्डित –प्रवराः श्रीरामसेवक झा महाशयाः साम्प्रतिकनैयायिकानामुपकारं विधाय श्रीमद्गोकुलनाथ–वंशजतया पितृतर्पणमपि कृतवन्तः। अतस्ते, सम्पादितपुस्तकस्य मुद्रणार्हपाण्डुलिपीकरणेन दर्शनविभागीयप्राध्यापको डॉ० बौआनन्द झा शर्मा, ग्रन्थक्रमविन्यास–मुद्रणाशुद्धि–संशोधनादिकृत्यसम्पादनेन व्याकरणविभागीयः प्राध्यापकः प्रकाशनप्रभारी डॉ० शशिनाथ झा शर्मा च नितरां धन्यवादमर्हन्ति। विश्वसिमि, एतेन ग्रन्थेन दर्शनशास्त्रीयसूक्ष्मतत्त्वान्वेषिणां परितोषः स्यादिति शम्।

१.३.२००० ई०

**काशीनाथ मिश्रः**
**कुलपतिः**



From time immemorial Mithila, the land of Janaka and Yajnavalkya, Gangesha and Udyana, Shankara and Vachaspati, Bharati and Mandana, Vidyapati and Gokulanatha, Dharmadatta and Badarinatha, has been a seat of Sanskrit Learning. Kings of Mithila held Sanskrit in high esteem and extended their patronage to it.

It was in the fitness of things that Kameshwar Singh Darbhanga Sanskrit University, a living testimony to the munificence and devotion to Sanskrit Learining of the Late Maharajadhiraja Dr. Sir Kameshwar Singh K.C.I.E. D.Litt the last ruler of Darbhanga Royal Family, was established on January 26, 1961. The late lamented Maharajadhiraja parted with his ancestral palatial building, adjoining vast campus and huge collection of published books and rare manuscripts with a view to preserving traditional Sanskrit Learning.

The Maharajadhiraja had his mind a plan to get the manuscripts published. The publication of the present volume is in continuation of the earlier volumes published so far by the University.

***

विश्वविद्यालय–संस्थापक :



महाराजाधिराजः डॉ० सर कामेश्वरसिंहः
मिथिलादेशे राज्यकालः– १९२९–१९६२ ई०

# भूमिका

## श्रीः

विदितमेव सर्वेषाम् यत् 'तमेव विदित्वा'—इति श्रुत्या आत्मतत्त्वसाक्षात्कारस्यैव मोक्षसाधनत्वम् वर्णितम्। अत्र च सर्वेषां दार्शनिकानाम् विप्रतिपत्तिः। प्रमाण—प्रमेय—संशय—प्रयोजन—दृष्टान्त—सिद्धान्तावयवतर्क—निर्णयवाद—जल्पवितण्डा—हेत्वाभासच्छल—जाति—निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाऽधिगमः' इत्यादि सूत्रयता महर्षिणा गौतमेन प्रमाणादिषोडशपदार्थतत्त्वज्ञानाद् निःश्रेयसाधिगम इति सूचितम्। मननापरपर्यायस्यानुमानस्य प्रतिपादनम् आन्वीक्षिक्यायत्तम्। यद्यपि ह्यागमादिगतस्याऽप्यर्थस्य अप्रामाण्यशङ्कास्कन्दितत्वेन तज्ज्ञानं फलाय कल्पते। अप्रामाण्यशङ्काकलङ्कपङ्कप्रक्षालनम् आन्वीक्षिक्यधीनम्। उक्तञ्च भाष्यकृता—कः पुनरयं न्यायः? प्रमाणैरर्थपरीक्षणं न्यायः। प्रत्यक्षागमाश्रितञ्चानुमानम्। साऽन्वीक्षा। प्रत्यक्षागमाभ्यामीक्षितस्यार्थस्य अन्वीक्षणम् अन्वीक्षा, तया प्रवर्तत इत्यान्वीक्षिकी न्यायविद्या न्यायशास्त्रम्। यत्पुनरनुमानम् प्रत्यक्षागमविरुद्धं न्यायाभासः'। अत्र वार्तिकम् किमुक्तं भवति ?— समस्तप्रमाणव्यापारादर्थाधिगतिर्न्यायः। नैकैकं प्रमाणम् अर्थपरिच्छेदहेतु—भावेन व्यवतिष्ठमानं न्याय इत्युच्यते, किन्तु समस्तानि। सोऽयं विप्रतिपन्नपुरुषप्रतिपादकत्वात् परमो न्यायः? अत्र तात्पर्यटीका''प्रत्यक्षादिप्रमाणमूलाः प्रतिज्ञादयः पञ्चावयवाः प्रमाणानि, तैरर्थस्य लिङ्गस्य परीक्षणं परीक्षा, परीक्षितन्तु लिङ्गम् पञ्चावयवोपपन्नम्, अनुमेयप्रत्ययफलं भाव्यत्वेन न त्वनुमेयार्थपरीक्षा, तस्य संदिग्धत्वेऽपि स्वरूपेण परीक्षानास्पदत्वात्। ननु अवयवैश्चेद् अर्थपरीक्षणम् न तर्हि प्रमाणैः कार्यकारणयोरभेदाभावाद् इत्यत आह—किमुक्तं भवतीति। न साक्षात् प्रतिज्ञादयोऽवयवाः अर्थपरीक्षायामुपयुज्यन्ते, अपितु स्वकारण—तत्प्रमाणसूचनेन। तस्मात् प्रमाणानामवान्तरव्यापारः प्रतिज्ञादय इति उपपन्नम् प्रमाणैरर्थ—परीक्षणम्। तदिदमुक्तम् प्रमाणव्यापारादिति। तस्मात् नैकैकं प्रमाणम् इति समस्त—प्रमाणोपकरणत्वादेव चास्य परमत्वम्। तत्रागम इति— न हि आगमवत् प्रतिज्ञावचनं निश्चायकम् हेतुवचनादिवैयर्थ्यात्। निष्पादितक्रिये कर्मणि साधनस्य साधनन्यायातिपातात्। समाधत्ते—आगमाधिगतस्येति—आत्मादिप्रमेयप्रतिपादनोद्देशेन हि शास्त्रमेतत् प्रवृत्तम्। तन्नान्तरीयकतया न्यायं व्युत्पादयत् तमेव व्युत्पादयेद् य आत्मादेः प्रमेयस्य साक्षाद् निश्चायकः तत्प्रतिपादकागमप्रामाण्यनिश्चायको वा। तस्य च न्यायविशेषस्याद्यः अवयवः

प्रतिज्ञा। आगमोपचारस्य च प्रयोजनमिदं यदर्थसंवादेन आगमेनानुगृह्यते, न्याय: सप्रयोजनश्च भवति। आगमार्थज्ञानस्य नि:श्रेयसहेतुभावेन निरूढ़त्वात्। तस्मात् यद्यपि न न्यायमात्रवर्तिनी प्रतिज्ञा आगम: प्रकृतन्यायाभिप्रायेणेदं द्रष्टव्यम्। तथाऽनुमानस्य न्यायानुग्राहकत्वं हेतुर्वचनस्य अनुमानत्वोपचारेण भाष्यकारेणोक्तम्। एतदुक्तं भवति यत्तद् द्वितीयं लिङ्गदर्शनं शुद्धमपि आपातत: सम्बन्धस्मृतिहेतुभावात् सम्बन्धस्मृतिसहकार्येव। तथा चानुमानम्, एवञ्च तत्प्रतिपादकस्य वचस: उपपन्न: अनुमानत्वोपचार:। स्मृतिविषयस्य प्रत्यक्षत: पुनरुपदर्शनम् प्रत्यक्षम् इति वार्तिककार:। **अत्र टीका**—यत्र प्रत्यक्षविषये पूर्वव्याप्तिर्गृहीता तस्य स्मृति: इति स्मृतिविषयस्य प्रत्यक्षत: पुनरुपदर्शनात् अविप्रतिपत्त्या पुन: स्मरणात् तत् स्मारकं वचनमुदाहरणं प्रत्यक्षम् मूलभूतप्रत्यक्षप्रमाणसमुत्थत्वाद् इति? क: पुनरुपमानार्थ:? **अत्र वार्तिककार**:—अविप्रतिपत्ति: यथा प्रत्यक्षे न विप्रतिपद्यते एवमुदाहरणेऽपि। यथातथेत्युपमानैकदेशे उपमानोपचारात् उपमानम् उपनय इति। **(भाष्यम्)**—उपमानं खलु यथा तथेत्युपदेशोपयोगे सति प्रत्यक्षागमस्मृतिपूर्वकम् सारूप्यज्ञानम् उपमानमिति। तत्रोपमानैकदेशे उपमानमित्युपचरन्ति **(वार्त्तिककारा:)**। **टीकाकार:**— उपनयो हि तथा चैतदिति प्रवर्तमान उदाहरणस्थं यथा शब्दार्थमपेक्षते इति यथा तथेति प्रवर्त्तते इति। किम् पुनरुपमानं यस्याऽयमेकदेश इत्यत आह—उपमानं खलु इति।

उपयोग: तदर्थविषयोऽनुभव:। तस्मिन् सति पश्चाद् वनं गतो नागरक: प्रत्यक्षेणादृष्टपूर्वं पिण्डं पश्यति, स्मरति च उपदेशार्थम् पिण्डस्य च पूर्ववर्तिना स्मर्यमाणेन गवा सादृश्यं प्रत्यक्षेणैव पश्यति। तदेवंभूतं सारूप्यज्ञानं गवयशब्दवाच्योऽयं पिण्ड इति प्रतीतिहेतु—रुपमानम्। तदेतस्योपमानस्योपदेशार्थस्मरणगवयपिण्डगोसादृश्यप्रत्यक्षरूपस्य एकदेशे सारूप्ये यो यथातथाभाव: स उपनयेऽप्यस्ति उपनय इत्यर्थ:। सोऽयं सर्वप्रमाणविनिवेशेन परमो न्याय: स्तूयते। सर्वेषाम् एकार्थसमवाये सामर्थ्यप्रदर्शनं निगमनम् इति भाष्यम्। **वा०**— क: पुनरेकार्थसमवाय:? एकवाक्याध्यारोप:? किं पुन: सामर्थ्यम्? इतरेतरसंप्रत्यायि—तार्थपेक्षित्वम्। एतच्च वक्ष्याम इति। निगम्यन्ते अनेन प्रतिज्ञादाय: एकार्थे सम्बद्ध्यन्ते इति निगमनम्। **(टीका)**— अध्यारोप: बुद्ध्या प्रतिसंधानम्। **सामर्थ्यं** हि पदानां धर्म:। इह तु विभज्यमानानामवयवानां तन्मूलानां च प्रमाणानां साकाङ्क्षत्वमेव धर्म: सामर्थ्यम्। तदत्र

समस्तरूपसम्पन्नलिङ्गप्रतिपादनमेकं प्रयोजनम्, विभज्यमान— साकाङ्क्षत्वञ्चास्ति— गतिसिद्धमेकवाक्यत्वमवयवानाम्। कः पुनः परमशब्दस्यार्थः? उत्तरम् विप्रतिपन्न— पुरुषप्रतिपादकत्वम् पञ्चावयववाक्यस्यापरमत्वमिति। एतदेव व्यतिरेकमुखेन प्रतिपादयति—एककैश इति। यद्यपि लोके प्रत्यक्षादीनामेकैकशोऽपि विप्रतिपन्नपुरुष— प्रतिपादकत्वं तत्र तत्रोपलभ्यते। तथाऽपि यदेतद् वेदप्रामाण्यम् आत्मादिप्रतिपादनञ्च निःश्रेयसोपयोगि न तत् पञ्चावयववाक्याद् एतच्छास्त्रोपदिष्टोपकरणाद् विना सिद्ध्यतीत्यनेनाभिप्रायेण द्रष्टव्यम्।

अत्र **परिशुद्धावुदयनाचार्याः**— प्रयोजनाभेदेऽपि आकांक्षाविरहितत्वात् वाक्यैकवाक्यत्वान्न भवति यथा—भगो वां विभजतु, पूषा वां विभजतु, अर्यमा वां विभजतु इत्यादि। अत उक्तम्—विभज्यमानेति। आकांक्षायामपि प्रयोजनानेकत्वे वाक्यैकत्वन्न भवति यथा स्योनं ते सदनं कृणोमि, घृतस्य धारया सुसेवं कल्पयामीत्यादि। अत उक्तमेकं प्रयोजनमिति। तदनेन 'अर्थैकत्वादेकं वाक्यं साकांक्षं चेद् विभागे स्यात्' इति जैमिनीयं वाक्यैकवाक्यतालक्षणम् अभिमतम्।

**भाष्यकारः**— सेयमान्वीक्षिकी प्रमाणादिभिः पदार्थैर्विभज्यमाना—

**प्रदीपः सर्वविद्यानाम् उपायः सर्वकर्मणाम्।**
**आश्रयः सर्वधर्माणां, विद्योद्देशे प्रकीर्तिता।।**

अस्यार्थः तात्पर्यटीकाकृद्भिरित्थं व्याख्यातः, यद्यपीतराः विद्याः प्रामाणिकमेवार्थ— मभिनिविशन्ते तथाऽप्येतद्विद्याप्रतिपाद्यमेव प्रमाणान्युपजीव्य स्वे स्वे व्युत्पाद्ये तत्त्वे प्रवर्तन्ते, न तु प्रमाणाद्यपि व्युत्पादयन्ति यथा प्रत्यक्षाद्युपजीव्य प्रवर्तमानमनुमानं न प्रत्यक्षादिविषयमपि तदानीमेव गोचरयति। तदनेन विद्योपकरणग्रहणेन व्यापारः आन्वीक्षिक्या दर्शितः। सम्प्रति विद्यानां यानि कर्माणि प्रतिपाद्यानि सामाग्निहोत्रकृष्णादीनि तत्राऽप्यान्वीक्षिक्युपाय इत्याह—उपायः सर्वकर्मणाम्। सर्वकर्मणाम्—विद्याव्युत्पाद्यानाम् न तु हालिकमृगव्यादि—कर्मणाम्। नहि विद्यापदेभ्यो यावन्मात्रावगतिः तावन्मात्रेण प्रेक्षावताम् परितोषः मा भूत्, आदित्यो वै यूप इत्यादिभ्यः आदित्यादीनाम् यूपादिता। तस्मात् संशयपरीक्षाविनिवेशद्वारेण तदर्थतत्त्वमवधार्य तत्र त्रयी विनिवेशनीया। एवं

दण्डनीतिवार्तयोरनुगन्तव्यम्। तस्मात् आन्वीक्षिकीपरिशोधितप्रमाणप्रकाशितं सामादि इतरा विद्या: कुर्वन्ति, विषयम् इति शेष:। अपि च द्रव्यगुणकर्मणाम् अभिमताऽनभिमतोपायताप्रज्ञापनेन यथायथं सर्वा विद्या: प्रेक्षावत: प्रवर्तयन्ति निवर्तयन्ति वा। तत्र किमविशेषेण साध्यसाधनेतिकर्तव्यतासु प्रवर्तयन्तु आहोस्वित् साधनेतिकर्तव्यतामात्रे। तत्र यदि साध्यांशोऽपि प्रवर्तनागोचर:, तदा श्येनादिसाध्याया: हिंसाया: विहितत्वेन नाऽनर्थवत्त्वम्। अथ साध्यांशं रागत: प्राप्तमनूद्य साधनेतिकर्तव्यते एव विधीयेते, तत: श्येनादिसाध्याया: हिंसाया अविहितत्त्वेन "न हिंस्यात् सर्वाभूतानि" इति प्रतिषेधादनर्थत्वम्। तदिह साध्यांशे अप्रवर्तनम् आन्वीक्षिकीगम्यम्। एवम् अनुष्ठानगता: प्रयोजकत्वाऽप्रयोजकत्वादय: आन्वीक्षिकीगम्या:। एवं वार्तादिष्वपीति। तदेवमान्वीक्षिकीमाश्रयन्ते सर्वविद्या इत्याह—आश्रय: सर्वधर्माणाम्। सर्वासाम् विद्यानां पुरुषप्रवर्तनाधर्मा: तेषामाश्रय:। अत्र परिशुद्धिकारेण उदयनाचार्येणोक्तं यत्— न च श्येनसाध्याया: हिंसाया: विहितत्वेनार्थत्वमेव भवतु, का क्षतिरिति वाच्यम्। विधिर्हि प्रवर्त्तक:, स्वज्ञानेन इच्छामन्तरा कृत्वा प्रयत्नोत्पादक इति यावत्। स च प्रयत्नो न साध्यविषय: कर्तुं शक्यते। उपायो हि प्रयत्नविषयो न तु फलम्। तस्मात् प्रयत्नविषयत्वात् साधनेतिकर्तव्यते एव विधीयेते, न तु साध्यं तदविषयत्वात्। नहि ज्ञापकत्वमात्रं विधित्वम् किन्त्विच्छाप्रयत्नविषयज्ञापकत्वमिति। तस्मात् श्येनादिसाध्या हिंसा अनर्थभूतैव अर्थ: स्यात् यदि विधिविषय: स्यादिति साधूक्तम्।

साख्यं योगो लोकायतं चेत्यान्वीक्षिकी, धर्माधर्मौ त्रय्या, अर्थाऽनर्थौ वार्तायाम्, नयाऽनयौ दण्डनीत्यां, बलाबले चैतासाम् हेतुभिरन्वीक्षमाणाऽन्वीक्षिकी लोकस्योपकरोति व्यसनेऽभ्युदये च बुद्धिमवस्थापयति। प्रज्ञावाक्यक्रियावैशद्यं च करोति इति प्रतिपादयता कौटिल्येनाऽपि आन्वीक्षिक्या: सर्वविद्योपकारकत्वमभिहितम्।

वस्तुतस्तु ऋषिप्रणीतभिन्नस्य सर्वस्यापि निबन्धस्य परार्थानुमानग्रन्थपरिचयरूपत्वात् परार्थानुमानमतीवोपादेयताम् बिभर्ति। अत्र प्रकृतग्रन्थे परार्थनुमानात्मकमननरूपन्यायस्य अवयवा: तत्त्वचिन्तामणिकृता जगद्गुरुणा गङ्गेशोपाध्यायेन वर्णिता:। तस्य व्याख्यानात्मकोऽयं निबन्ध: अवयवदीधितिविद्योतनाम्ना प्रसिद्धोऽस्ति। तत्त्वचिन्तामणेस्तु बह्वय: टीका: सन्ति, तत्र यज्ञपत्युपाध्यायेन निर्मिता प्रभानाम्नी, सर्वतन्त्रस्वतन्त्रेण पक्षधरमिश्रेण निर्मिता आलोकनाम्नी

टीका च प्रसिद्धे वर्तेते। नैयायिकशिरोमणिरघुनाथकृततत्त्वाचिन्तामणि–व्याख्या दीधितिः आसेतु–हिमाचलम् भारते वर्षे अध्यायनाध्यापनयोः चिन्तामणिं प्रकाशयन्ती विद्योतते इति नाऽस्त्यतिरोहितम् प्रेक्षावताम्। अस्याश्च दीधितिव्याख्यायाः व्याख्याभूतो महामहोपाध्याय–गदाधरभट्टाचार्येण निर्मिता गादाधरी व्याख्या सुप्रसिद्धास्ति। यद्यपि दीधितिमवलम्ब्य चिन्तामणिं व्याख्यातुम् अन्येऽपि आचार्याः जगदीशतर्कालङ्कार–प्रभृतयः प्रवृत्ताः सन्ति, तथाऽपि अनुमानखण्डे गादाधरी व्याख्यायाः वर्तते किमपि वैशिष्ट्यम्। अवयवचिन्तामणिस्तु गादाधरीमनुसृत्यैव सर्वत्र पाठ्यते। प्रकृतगन्थकर्त्रा सर्वतन्त्रस्वतन्त्रेण महामहोपाध्याय–गोकुलनाथोपाध्यायेन अवयवदीधितेः व्याख्यानं विहितम्। तत्र च पूर्वव्याख्यात्रोः यज्ञपत्युपाध्याय– पक्षधरमिश्रयोः व्याख्ययोः निर्दुष्टत्वमुपपाद्य स्वव्याख्यायां तत्संवादित्वमपि प्रदर्शितम्। शिरोमणेः दीधितिव्याख्यायाः अपि अभिप्रायो वर्णितः। इदञ्च शिरोमणेर–भिप्रायाविष्करणम् अनितरसाधारणं वर्तते। अवयवग्रन्थे च चिन्तामणिकर्तुः तात्पर्यम् अबुद्ध्वैव शिरोमणिः तल्लक्षणमनुपपन्नमिव मत्वा अन्यथैव वर्णितवान्। उपाध्यायचरणैस्तु शिरोमणिप्रकाशितानि दूषणानि उद्धृत्य कथं पञ्चावयववाक्यैः परार्थपरामर्शः जन्यते, तदपि समीचीनतया निबन्धेऽस्मिन् न्यरूपि। दिङ्मात्रमत्र प्रस्तूयते। मङ्गलश्लोकेनैव एतद् वस्तु ग्रन्थकृता ध्वनितम्। तथा हि–

चिन्तामणिप्रकाशेन निरस्ततमसो मम।
न्यायो गोकुलनाथस्य स्फुरत्ववयवैः सह।।

अन्ते च–

न्यायावयवमणौ यो दीधितिदोषेण दर्शितो दोषः।
तस्योद्धरणेन मयि प्रीयेत प्राकृतेतरः पुरुषः।।

इति च।

ग्रन्थकृतां मतम्– अनुमितिर्द्विविधा स्वार्था परार्था च। स्वार्थ–परार्थत्वे पुनरनुमितित्व–व्याप्ये जाती। तत्र स्वार्थानुमितिं प्रति कारणता परामर्शस्याप्रामाण्यशङ्काकलङ्कशून्य–व्याप्तिविशिष्टपक्षधर्मतानिश्चयत्वादिना पूर्वमुपपादिता (परामर्शग्रन्थे इत्यर्थः)। परार्थानुमितौ न तथाविधपरामर्शः कारणम्, वादिवाक्यप्रयोज्यपरामर्शे धर्मिण्यप्रामाण्यशङ्कावतोऽपि वादिनो मध्यस्थस्य वा तथाविधानुमित्युदयाद् इत्यादि। अतो मानसत्वावान्तरवैजात्यविशेषेण

न्यायप्रयोज्यपरामर्शो विशिष्य परार्थानुमितौ कारणम्। अप्रामाण्यशङ्काविरहो न कारणम्, न वा तत्त्वावच्छेदक इत्यभ्युपेय: अन्यथाऽनुपपत्ते:। स च विजातीय: परामर्श: तावद् अर्थोपस्थितिमात्रसहितेन मनसा केवलं न जननीय:, चक्षुरादिना न्यायभिन्नेन वा शब्देन उपस्थितेषु व्याप्तिपक्षलिङ्गेषु तथाविधपरामर्शोत्पत्तिप्रसङ्गात्। किन्तु वह्निव्याप्य–धूमवान् पर्वत इत्याकारे विजातीयपरामर्शे पर्वतपक्षकवह्निसाध्यकधूमलिङ्गक–न्यायेन जनितो महावाक्यार्थबोध: तत्त्वेन जनक:। यदाहुर्मिश्रा: न्यायजन्यमहावांक्यार्थज्ञानस्य तु तादृशज्ञानत्वेनैव जनकत्वम्। वाद्युक्तप्रयोगज्ञान एवोक्तपरामर्शसामग्रीसत्त्वात्। अन्यवाक्यात् वह्निव्याप्य–धूमवान् इत्यादि परामर्शस्यैव आहत्योत्पाद:। इत्थञ्च न्यायजन्य–महावाक्यार्थ– ज्ञानेन विजातीये परामर्शे जननीये समयबन्धविशेषस्य ज्ञानम् सहकारीत्युपाध्याया:। व्यापार इति मिश्रा:। समयस्तु परामर्शस्यानुमितेर्वा प्रयोजकत्व–स्वरूपो यादृशानुपूर्वीक–वाक्यत्वाच्छब्देनावगत: तादृशानुपूर्वीकवाक्यजनितो महावाक्यार्थबोध: परामर्शप्रयोजक:। तथा हि– प्रतिज्ञादिरुदाहरणान्तो वाक्यकलाप: परामर्शविशेषस्यानुमिति– विशेषस्य वा प्रयोजन इति समये गृहीते प्राभाकराणां तथाविधवाक्येनैव उदाहरणोपनयावेव तथेति ज्ञानवतां बौद्धानां सांख्यानाञ्च तथाविधेनैव, विषयसंशयादयो दशवाक्यसन्दर्भा: परार्थं प्रयोजयन्तीति निश्चयवतो जरन्नैयायिकादे: तैरेव दशभिर्वाक्यैर्जनितो महवाक्यार्थबोध: परामर्शं प्रति तृणारणिमणिन्यायेन जनक:। तत्तद्दर्शनसमयबन्धवशात् सर्वोऽपि न्याय:।

परन्तु पञ्चावयववाक्यजनिता भगवदनुमितिरदृष्टद्वारात्मसाक्षात्कारस्योपकरो–तीत्याकरानुसारिण: काश्यपाङ्गिरसा निर्दिशन्ति। अत एव प्रयत्नसाध्यप्रश्नवाक्यादिक्रमेण श्रुतिवाक्योत्पत्तिद्वारा श्रवणस्येव तथैव न्यायवाक्योत्पत्तिद्वारा मननस्याऽपि कृतिसाध्यत्वं मन्तव्य: इति श्रुत्या प्रतिपाद्यते। एवं स्थिते निरूपितानामेककार्यानुकूलत्वेन निरूपितपरामर्शस्य हेतुत्वेन वा संगत्या न्यायन्निरुपयितुं निरुक्तसंगतिं सूचयति मूले तच्चानुमानं परार्थं न्यायसाध्यमिति। परार्थानुमानम्–परार्थानुमित्युपहित: परामर्श:, न्यायसाध्यम्–न्यायजन्य–महावाक्यार्थज्ञानजन्यम्। अथवा परार्थानुमानं परार्थानुमिते: सव्यापारकं कारणम्, व्याप्तिमपि विषयीकुर्वन् महावाक्यार्थज्ञानम्। तथा च निरूपितानुमाने जनकत्वमपि न्यायस्य संगति:। मूलम् चिन्तामणि:–अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्यं न्याय:।

टीका—(**विद्योतः**)— किन्तु अनुमितिचरमेति— स्वार्था परार्था चेति विभक्त्योर—नुमित्योः यच्च चरमं परार्थानुमितिः तत्कारणम् यो लिङ्गपरामर्शः विजातीयम् व्याप्तिविशिष्टपक्षधर्मताज्ञानं तस्य प्रयोजनकम् यच्छाब्दज्ञानम् तज्जनकं वाक्यं न्यायः। यत्र वह्निव्याप्यधूमवान् पर्वतः इति वाक्यजन्यवाक्यार्थबोधात् मानसो वह्निव्याप्यधूमवान् पर्वत इति परामर्शः, ततः स्वार्थानुमितिः तत्रत्यवाक्येऽतिव्याप्तिवारणार्थं चरमेति। अनुमितिचरमकारणलिङ्गपरामर्शत्वेन मानसत्वव्याप्यो वैजात्यविशेष उपलक्ष्यते। अत्र तज्जातीयम् प्रति प्रयोजकत्वम् जनकत्वमेव प्रकृते विवक्षितम् न्यायजन्यवाक्यार्थज्ञानस्य साक्षादेव तादृशपरामर्शकारणत्वात्। अत्र **चिन्तामणिः**—प्रतिज्ञादिपञ्चवाक्यैरेकवाक्यतया स्वार्थविशिष्टज्ञानं जन्यते। तेन च विशिष्ट— वैशिष्ट्यावगाहिमानान्तरम् उत्थाप्यते। तेन च चरमः परामर्श उत्पाद्यत इति न्यायजन्यशब्दज्ञानस्य परामर्शप्रयोजकता।

**विद्योतः**— तेन चेत्यादिमूलन्तु—तेन न्यायजन्यमहावाक्यार्थज्ञानेन पक्षे व्याप्तिविशिष्ट—वैशिष्ट्यावगाहिनी या मितिः तस्याः कारणान्तरं मनः, उत्थाप्यते—स्वात्मकसहकारिसम्पन्नं क्रियत इति व्याख्येयमित्युपाध्यायाः। **पक्षधरमिश्रास्तु** प्रयोजकत्वम् सव्यापारकारणत्वं न्यायजन्यमहावाक्यार्थज्ञानेन न्यायविशेषोऽनुमितिविशेषस्य प्रयोजक इति स्मरणम् उद्बोधकविधया जन्यते तदेव स्मरणं व्यापारमासाद्य महावाक्यार्थधीः परामर्श—विशेषमुत्पादयति। तेन चेत्यादिमूलस्य तु न्यायत्वविशिष्टानुमितिविशेषप्रयोजकत्व—वैशिष्ट्यावगाहिमानान्तरमनुभवान्यज्ञानमुत्थाप्यत इति **मिश्राः**।

**विद्योतः**— युज्यते चैतत् मिश्रमतम्। अत एव समयबन्धवाक्येऽतिव्याप्ति—वारणार्थं शाब्दत्वमपि ज्ञाने विशेषणम् अर्थवत्। अन्यथा समयबन्धवाक्यजन्यशाब्दबोधोऽपि पञ्चावयववाक्यम्—अनुमितिप्रयोजकं इत्याकारकः समानाकारस्मरणद्वारा परार्थपरामर्श—प्रयोजक इति तज्जनकवाक्येऽतिप्रसङ्गात्। शाब्दपदोपसन्दाने च शाब्दबोधत्वेन प्रयोजकता लभ्यते, समयबन्धग्रहस्तु शाब्दप्रत्यक्षादिसाधारणज्ञानत्वेन प्रयोजको न तु शाब्दत्वेन। **तदुक्तमालोके**— न च शाब्दपदोपादानेऽप्येष दोषः। शाब्दत्वेन तादृशप्रयोजकत्वस्य विवक्षितत्वात्। न च योग्यताज्ञानं, तथायोग्यताज्ञानत्वेन जनकत्वाद् इति। अत्र योग्यतापदं समयबन्धपरमित्यवधार्यम्।

अथोपाध्यायमतेऽपि–यत्र समयबन्धवाक्यस्य पञ्चावयववाक्यस्य चैकं समूहालम्बनात्मकं स्मरणम्, अथ न्यायार्थस्य पञ्चावयववाक्यत्वावच्छेदेनानुमिति–प्रयोजकत्वावगाही समूहालम्बनशाब्दबोध:, तत: परार्थपरामर्श:। तत्रत्यसमयबन्ध–वाक्येऽतिव्याप्तिवारणाय शाब्दपदम्। आनुपूर्वीविशेषलाभाय च वाक्यपदम्। तथा च यादृशानुपूर्वीकवाक्यजन्यवाक्यार्थबुद्धित्वावच्छेदेन परार्थानुमितिजनकत्वं तादृशानुपूर्वीमत्त्वम् न्यायपदप्रवृत्तिनिमित्तं लभ्यते। अवश्यञ्चेदमन्यैरपि विवक्षणीयम् इति चेत् तदा भवतु प्रयोजकपदं जनकार्थकम्, अस्तु च समयज्ञानं सहकारि, न तु व्यापार:। इदञ्च सर्वदर्शनसाधारणं न्यायसामान्यलक्षणम्, त्रिषु द्वयोर्वाऽवयवयो: पर्याप्तानुपूर्वीकस्याऽपि वाक्यस्य तत् समयग्रहसहकारेण परार्थपरामर्शप्रयोजकत्वात्। अतएव आत्मतत्त्वविवेकादा–यत् सत् तत्क्षणिकम् सँश्च विवादाध्यासितशब्दादिरिति द्व्यवयवेनैव न्यायकथा दृश्यते। ननु एवम् पर्वतेऽग्निर्धूमायते, धूमो वह्निमन्मात्रवृत्तिरस्ति च धूमे पर्वतवृत्तित्वम्, तस्मादग्नि: पर्वतवृत्तिरिति वाक्येऽतिव्याप्तिरुद्भाविताऽलोककारैर्विरुध्येत। तद्वृत्तेरप्यानुपूर्व्या: समयग्रह–सहकारेण परार्थपरामर्शप्रयोजकतया तादृशवाक्यस्य न्यायत्वसंभवादिति चेन्न, सर्वदर्शनसम्प्रदायविरुद्धानुपूर्वीकवाक्यजन्यवाक्यार्थग्रहस्य च परार्थपरामर्शप्रयोजकत्वस्य तत्र तादृशानुपूर्वीकवाक्यमनुमितिप्रयोजकमिति समयग्रहसहकारितायाश्च प्रमाणाभाव–प्रतिहतत्वात्।

अन्वीक्षादर्शने (न्यायदर्शने) न्यायपदपरिभाषाप्रवृत्तिनिमित्तन्तु सूत्रकाराभ्युपगत–समयग्रहसहकारेण यादृशानुपूर्वीकवाक्यजन्यवाक्यार्थबुद्धित्वावच्छिन्नपरार्थपरामर्शं जनयति तादृशानुपूर्वीमत्त्वम्। तेन रूपेणोद्दिष्टस्यैव न्यायस्यावयवा: प्रतिज्ञादयो विभक्ता, न न्यूनत्वं नाधिकमिति दिक्।

पञ्चभिर्वाक्यैरेकवाक्यतया इत्यादि मूलस्य त्वयमर्थ:– तै: एकवाक्यतया परस्पर–सहकारेण निरुक्तै: पञ्चभि: स्वार्थै: विषयतया विशिष्टं ज्ञानं समूहालम्बनात्मक–शाब्दबोधो जन्यते तेन च मानान्तरमनुमित्युपहिताया: पक्षे व्याप्तिविशिष्टवैशिष्ट्यावगा–हिन्या मिते: परार्थपरामर्शस्य कारणम् मन: उत्थाप्यते–कार्यप्रवणीक्रियते। तेन मनसा चरम: परामर्श: चरमगणितानुमिति–(परार्थानुमिति) जनको विलक्षण: परामर्श: उत्पाद्यते।

तथा च पर्वतो वह्निव्याप्यधूमवान् इति परार्थपरामर्शे पर्वतो वह्निमान् धूमात् इत्याद्यानुपूर्वी–ज्ञानत्वावच्छिन्नकारणतानिरूपिता च धूमज्ञानज्ञाप्यवह्निमत्पर्वतविषयकत्वावच्छिन्नायाश्चैवं–विधाश्चतस्रोऽपराः कार्यताः तावत् कार्यतापञ्चकविशिष्टं यत् पर्वत इत्यादि तस्मात्तथेत्यन्त–महावाक्यपर्याप्तानुपूर्वीकज्ञानाव्यवहितोत्तरोत्पत्तिकं शाब्दं ज्ञानं तत्त्वेनैव कारणत्वमिति महानुपूर्वीज्ञानस्यान्यथासिद्धत्वेपि न क्षतिः। यादृशानुपूर्वीज्ञानाव्यवहितोत्तरोत्पत्तिकशाब्द–बुद्धित्वेन परार्थपरामर्शत्वावच्छिन्नं प्रति जनकत्वम् तादृशानुपूर्वीमत्त्वम् न्यायत्वमपि न दुर्वचम्, जनकपदस्याव्यवहितपूर्ववर्तिपरत्वात्। न्यायजन्यस्य न्यायवृत्तिमहानुपूर्वी–ज्ञानाव्यवहितोत्तरोत्पत्तिकस्य परामर्शं प्रति प्रयोजकता जनकता, सा च साक्षात् सव्यापारिका वेत्यन्यदेतत्।

एवम् उपपद्यमानमपि मूलम् आपातरमणीयैर्दोषैः अनुपपन्नमिव मत्वा स्वयं न्यायलक्षणमाह दीधितौ—उचितानुपूर्वीकप्रतिज्ञादिपञ्चकसमुदायत्वम् न्यायत्वम्। एवम् पदैकवाक्यतामभिप्रेत्य एकवाक्यताऽपि खण्डिता।

**विद्योतः**— अत्रेदमवधेयम्—प्रतिज्ञापञ्चकसमुदायत्वम् यदि न्यायत्वम् तदा द्व्यवयवक–वाक्यं न्याय इति बौद्धैः सह विवादः कथं पदमादध्यात्। नहि द्व्यवयवकं वाक्यं पञ्चावयवसमुदाय इति बौद्धाः व्यपदिशन्ति व्याहतत्वात्। अग्रे च प्रतिज्ञानसाधनाङ्गमित्यादिका शङ्का कथमवतरेत्। साधनानङ्गत्वेन न्यायावयवत्वस्यैव तत्र निषेधात्। न च प्रतिज्ञान–प्रतिज्ञाद्यन्यतमेत्याशङ्कितुं शङ्क्यते, नाऽपि न न्यायान्तरगतेति व्याघातात्। तथा च यत् सत् तत् क्षणिकम् सँश्च विवादाध्यासितः शब्दादिरिति उदाहरणोपनयमात्रात्मकं वाक्यं न्यायो न वेति विप्रतिपत्तिविषयन्यायस्वरूपनिर्वचनप्रस्तावे किमनेन नैयायिकमात्राभिहित—न्यायधर्मि–निर्वचनेन। ततो यादृशानुपूर्वीकवाक्यप्रयोज्यवाक्यार्थबुद्धित्वेन परार्थपरामर्शप्रयोजकत्वं तादृशानुपूर्वीकवाक्यत्वम् सर्वदर्शनसाधारणम् न्यायलक्षणम् अवश्यं निर्वाच्यम्। यस्य द्व्यवयवकवाक्यत्वावच्छेदेन विवादः प्रतिज्ञानसाधनाङ्गम् इत्यादिका शङ्कास्तु तादृशानुपूर्वी–घटकत्वस्वरूपमवयवतदवयवसाधारणन्यायान्तर्गतत्वमात्रमालम्बते। मौलमवयवलक्षणम् नैयायिकपरिभाषितावयवमात्रमालम्बते, अत एव पञ्चधा तद्विभागोऽपि प्रतिज्ञावाक्ये संगच्छते।

यदपि पञ्चभिरवयवैरेकवाक्यतया बोधो न भवतीत्युपपादितम्, तदपि चिन्त्यम्। द्विविधा हि एकवाक्यंता पदैकवाक्यता वाक्यैकवाक्यता च। पदैकवाक्यत्वम्— प्रतिज्ञा–हेत्वोरुपनय–निगमनयोरेव, न तु उदाहरणेन, कस्याऽपि तथाविधवाक्यैकवाक्यत्वम् पञ्चाना–मवयवतात्र सम्भवत्येव। अत एव प्रतिज्ञादिपञ्चवाक्यैरेकवाक्यतया स्वार्थविशिष्टं ज्ञानं जन्यते इति मूले वाक्यैकवाक्यतैवोक्ता न तु पदैकवाक्यता। वाक्यैकवाक्यतायाञ्च पदयोरिव न तुल्यविभक्तिषष्ठ्यन्तत्वादितन्त्रम्, किन्तु संगतिमात्रम्, अत एव मूले प्रत्यवयवमेकवाक्यतायै सङ्गतयः प्रदर्शिताः।

दर्शपूर्णमासाभ्यां यजेतेति प्रधानविधिना यागेन स्वर्गम् भावयेदित्यवगतायां भावनायां कथमित्याकांक्षया उपपादकत्वसंगत्या प्रवृत्तः 'इडो यजति' इत्यादि विध्यवगतस्य प्रयाजस्योपपाद्योपपादकभावेनान्वयः। यथा संगत्या ययोर्वाक्ययोः पौर्वापर्येण प्रवृत्तिः तदर्थयोः तेनैव संसर्गेणाऽन्वयोपगमात्। अत एव मलिनं वपुरिति सिद्धार्थे निर्दिष्टे किं तदिति साध्यत्वसंगत्याऽभिहिते 'सरसि स्नायाः इति' वाक्ये साध्यतयैव वपुर्मालिन्यस्यान्वयः। अत एव त्वं पश्येत्युक्ते किमित्याकाङ्क्षायामुक्ते मृगो धावतीति वाक्ये विषयितया मृगकर्तृकधावनस्य दर्शनेऽन्वयः। अत एव पश्य मृगो धावतीत्यादावेकवाक्यताव्यवहारः शब्दविद्यावतामत एव तिङ्तिङ इति सूत्रेण अतिङन्तात् परं तिङन्तं निहन्यत इत्यर्थकेनाऽतिङ इति तिङन्तशब्दः पर्युदस्तः। अग्निमीले पुरोहितम् इत्यत्रेले शब्दे सुबन्तात् परे यथा निघातो नाम सर्वानुदात्तस्वरः, तथा धावति पश्येत्यत्र पश्य–शब्दस्याऽपि प्रसज्येत। तत्र दर्शनधावनयोः परस्परमन्वये सामर्थ्याभावादेव निघातस्वराप्रसक्तौ सौत्रमतिङिति पदमनर्थकमा–पद्येत इति क्रिययोरपि परस्परान्वयो वाक्यैकवाक्यतयाऽवश्यमभ्युपेतव्यः। पदसम्बन्धिनो विधेः समर्थमात्राश्रितत्वेन पूर्वपदव्यपेक्षारहिते निघातादिविधिर्न प्रवर्त्तत इति तद्विदो मन्त्रणीयाः। अत एव मूले साध्यनिर्देशानन्तरं कुत इत्याकांक्षायाम् साधनत्वाऽभिव्यञ्जक–विभक्तिमल्लिङ्गवचनमेवोचितमित्यनेन विभक्त्यादिनिर्देशात् पदैकवाक्यतैव सूचयिष्यते। वाक्यैकवाक्यतया साधनत्वेनान्वये 'मलिनं ते वपुःस्नाया' इत्यादौ साधनाऽभिव्यञ्जक–विभक्तेरनुपयोगात् हेतुना च धूमस्य गमकत्वे प्रदर्शिते कथमस्य गमकत्वमित्याकांक्षायाम् उपपादकत्वसंगत्याऽभिहिते उदाहरणे तदर्थव्याप्तेः उपपाद्योपपादकभावसंसर्गेण

गमकत्वेऽन्वयोऽत एव हेतावुक्ते कथमस्य गमकत्वमित्यादिमूलेन हेतूदाहणयोरुपोद्धात: सूचयिष्यते। उदाहरणोपनयवाक्ययोरपि वाक्यैकवाक्यतयाऽन्वयादेव धूमवान् धूमव्यापक–वह्निमान् इत्यर्थलाभात् यत्तच्छब्दयोरुभयोरपि महानसत्वेन महानसस्य पर्वतत्वादिना पर्वतादेश्च केवलं बोधकतया तच्छब्देन धूमवतोऽनुपस्थापनात्। अतो यो यो धूमवान् इत्यादिवाक्येन 'महानसं धूमवत्' पर्वतो धूमवान् इत्यादिकमुपस्थितम्। स वह्निमान् इत्यनेनाऽपि 'महानसं वह्निमत् पर्वतो वह्निमान्' इत्युपस्थितम्। ततो यत्तदर्थपरिहारेण वाक्यैकवाक्यतयैव धूमवान् धूमव्यापकवह्निमान् इत्यन्वयबोध:। यच्छब्दद्विर्वचनार्थव्यापकतायास्तत्रैव बुद्धावनुप्रवेशात्। अत एव यच्छब्दयोगोऽप्युद्देश्यताव्यञ्जकमध्ये परिगणित:, तत्पदार्थस्योद्देश्यत्वे तु तत्पदोपस्थितत्वं प्राथम्यं वा नियामकमित्येवाभ्यधास्यत्। तस्मात् धूमवदुद्देश्यकमहावाक्यार्थ–बुद्धौ यच्छब्दघटितवाक्यजन्मा धूमविधेयकोपस्थिति: कारणमिति वाक्यैकवाक्यतयोद्देश्य–विधेयभावप्रापकमित्यवसीयते। दृष्टान्तार्थोऽपि वह्निमति विशेषणतयैवाऽन्वेति। एवम् उदाहरणार्थ उपनयार्थश्च द्वावप्युपपाद्योपपादकभावेन हेत्वर्थ–गमकत्वेऽन्वित:। अत एव व्याप्तिपक्षधर्मतयोरुभयोरप्युपदर्शनप्राप्तौ व्याप्ते: प्राथम्यादित्यादिना मूलेन हेतूपनयया–रप्युपपादकत्वसंगति: सूचयिष्यते। यदि पुनरुदाहरणोपनयार्थयोरन्वयेऽभिनिवेशस्तदा भवतु व्याप्तिरित्यादिना मूलेन सहकारित्वेनान्वय: सूचयिष्यते। उपनयनिगमनयोस्तु पदैकवाक्यतैव इति वाक्यैकवाक्यतया पञ्चानामवयवानाम् एकविशिष्टार्थ बोधकत्वं मूलोक्तं नानुपपन्नमिति दिक्।

**चि०**—किन्तूद्देश्यानुमिति–हेतु–लिङ्ग–परामर्शप्रयोजकवाक्यार्थज्ञानजनकत्वे सति उद्देश्यानुमित्यन्यूनाऽनतिरिक्तविषयक–शाब्दज्ञानजनकवाक्यत्वम्–इति प्रतिज्ञालक्षणम्। अत्र **दीधिति:**—किन्त्वित्यादि–प्रकृतन्यायबहिर्भूतवाक्यवारणाय सत्यन्तम् प्रकृतन्यायावयवत्व–पर्यवसितम्। उद्देश्येति प्रकृतेत्यर्थ:। वह्निसाधकोपनयस्य वह्निव्याप्य धूमसाध्यकानुमित्यन्यूना–ऽनतिरिक्तविषयकशाब्दबोधजनकस्य बाधनाय प्रकृतद्वयम्। तथा च यादृशपक्ष–साध्यकन्यायावयवत्वं तादृशपक्षसाध्यकानुमित्यन्यूनाऽनतिरिक्तविषयक– शाब्दज्ञानजनकत्वं पर्यवसितोऽर्थ:। धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यादावनतिरिक्त– विषयकज्ञानजनकस्य हेतोर्वारणायाऽन्यूनेति। निगमनवारणायाऽनतिरिक्तेति। यद्यपि निगमने साक्षात् पक्षवाचकपदं

न श्रूयते तथाऽपि न्यूनताभङ्गायोपनयस्यायमादिपदस्यानुषङ्गात् तथा बोध्यम्। इत्थमेव च प्रसक्तामतिप्रसक्तिं निगमनञ्चेत्यादिना निराकरिष्यति। तदर्थश्च निगमनमन्यूनाऽनतिरिक्त–विषयकशाब्दज्ञानजनकं सन्न परामर्शहेतु: येन निरुक्तन्यायावयवत्वरूपं प्रतिज्ञात्वं तदपि व्याप्नुयात्। अबाधितत्वादे: तद्बोधौपयिक– विशिष्टहेतुसम्बन्धस्य च बोधकतया तस्याऽतिरिक्तविषयकज्ञानजनकत्वात्।

यत्तु पृथिवीतरेभ्यो भिद्यते पृथिवीत्वादित्यादौ यत्र पृथिवीतरेभ्यो भिद्यते तत्र पृथिवीत्युदाहरणवाक्यवारणाय तदिति, तत्तुच्छम्। तेन पृथिव्यामितरभेदस्याऽविषयीकारणात्। तात्पर्यभ्रमेण तादृशबोधजनकत्वस्याऽतिप्रसक्तत्वात्। न च तावताऽप्युदाहरणस्य तथा त्वसम्भव: तत्रेत्यादेरनन्वयादित्यादि।

दी० विद्योत:– किन्तूद्देश्येति, अत्रैवंविधावनुमितावियं प्रतिज्ञेति प्रामाणिकव्यवहारगोचर–वाक्यत्वं लक्ष्यतावच्छेदकम्। अथवा तादृशवाक्यार्थनिर्वचनपरमिदम्। तत्राऽप्युद्देश्यानुमिति–पदद्वयं कण्ठोक्तानुवाद:। इतरत् सप्तम्यर्थनिर्वचनम्। उद्देश्यानुमिति: पर्वतो वह्निमानित्यादि: परार्थानुमिति:। तद्धेतुर्यो लिङ्गपरामर्श: तस्य प्रयोजकं जनकं यद्वाक्यार्थज्ञानम् तज्जकत्वे तदव्यवहितपूर्वज्ञानविषयानुपूर्वीमत्त्वे सतीत्यर्थ:। यादृशाऽनुपूर्वीकज्ञानाऽव्यवहितोत्तरोत्पत्तिक–वाक्यार्थज्ञानत्वेन यादृशपरामर्शजनकत्वं तादृशानुपूर्वीमत्त्वे सतीति यावत्। आनुपूर्वी तु तादृशोत्तरत्वस्वरूपा चरमवर्णमात्रे, तादृशपूर्वत्वस्वरूपा प्रथमवर्णमात्रे, कतिपयवर्णपूर्वोत्तरत्व–द्वयघटितमध्यत्वस्वरूपा मध्यममात्रे विश्राम्यतीति सर्वेऽपि न्यायघटका वर्णा: तादृशानुपूर्वीमन्त:, तेन न्यायत्वे सतीति फलितार्थ:। न्यायत्वं समुदायत्वं व्यासक्तमित्येकदेशिनामभिमानमात्रम्। उद्देश्यपदसमभिव्याहाराच्च प्रकृतपक्षसाध्यकन्यायत्वं लभ्यते। तेन पर्वतपक्षकवह्निसाध्यक–प्रतिज्ञालक्षणे द्रव्यं वह्निमद् वह्निमत्पर्वताद् इत्यत्र हेत्ववयवस्य वह्निमत्पर्वतभागे नाऽतिव्याप्ति: तस्याऽपि मध्यमत्वस्वरूपानुपूर्वीद्रव्यपक्षक–वह्निसाध्यक–न्यायानुपूर्वीमत्त्वात्। न वा हेतुत्वं धूमीयमिति प्रतिज्ञालक्षणहेतुत्वपक्षक–न्यायान्तरीये धूमादित्यवयवेऽतिव्याप्ति:, तस्य प्रकृतसाध्यकन्यायत्वविरहात्। एवमपि वह्निसाध्यकपर्वतपक्षकप्रतिज्ञालक्षणे धराधरो वह्निमान् इति प्रतिज्ञैकदेशे धरो वह्निमान् इत्यत्र धरापदव्यवकलितानुपूर्व्या: प्रतिज्ञाव्यवहार– निमित्तत्वं स्याद् इतिवाक्यत्वमुपात्तम्। तदर्थस्तु यादृशानुपूर्वीज्ञानत्वेनानुमितिसमान–विषयक–

वाक्यार्थबोधजनकत्वम् तादृशानुपूर्व्यन्तर्गतत्वम्, फलत: आनुपूर्वीविशेषणम्। एतावन्मात्रमपि हेत्वादावावयवेऽतिव्याप्तमत उद्देश्यानुमित्यन्यूनेति। तथा च पर्वतो वह्निमान् इत्येतावन्मात्र–विषयताको योऽन्वयबोध: तज्जनकतावच्छेदकानुपूर्वीमत्त्वमित्यर्थ:। एवं पर्वतपक्षकवह्नि–साध्यकन्यायत्वे सति पर्वतो वह्निमान् इत्यन्वयबोधत्वावच्छिन्नकार्यतानिरूपिता कारणतावच्छेदकानुपूर्व्यन्तर्गता या तादृशान्वयबुद्धित्वावच्छिन्नकार्यतानिरूपिता कारणतावच्छेदकानुपूर्वी सा पर्वतपक्षक–वह्निसाध्यक–प्रतिज्ञाव्यवहार–निमित्तमिति समुदायार्थ:। अत्र पर्वतत्वावच्छिन्नोद्देश्यतानिरूपते केवलवह्नित्वावच्छिन्न–विधेयताकान्वय–बोधत्वस्य कार्यतावच्छेदकत्वत्वायाऽन्यूनानतिरिक्तेति। अन्यथा धूमवान् वह्निमान् इत्यर्थकोदाहरणैकदेशे स वह्निमान् इत्यत्र हेत्वन्तभागे अयमादिनिगमनान्तभागे चाऽति–व्याप्ति: स्यादिति ध्येयम्।

दीधितौ तु पौर्वापर्यापन्न–वर्णवृत्तिसमुदायत्वविशेष: प्रतिज्ञात्वं, स च पर्याप्त्या स्वाश्रये प्रतिज्ञाव्यवहारं जनयति तत्परिचायकायेदं लक्षणमिति वासना। प्रकृतन्यायेति–पर्याप्तिभिन्नैकसमुदायत्ववान् इति प्रात्यक्षिकेण सम्बन्धेन न्यायपर्याप्तसमुदायत्ववत्त्वे सति यादृशसमुदायत्वावच्छेदेनावयवत्वव्यवहार: तत्पर्याप्यधिकरणत्वे सतीत्यर्थकं सत्यन्तमित्यर्थ:। मतङ्गजो नील इत्यत्र गजो नील इति भागवारणायावयवव्यवहार–प्रयोजकसमुदायत्वाऽन्यूनवृत्तित्वमपि मुख्यसमुदायत्वे विशेषणम्। अथवा यादृशसमुदायत्वा–वच्छेदेन प्रकृतन्यायायवयत्वव्यवहार: तादृशसमुदायत्वे सतीत्येव सत्यन्तार्थ:। तस्य स्वोक्तस्य प्रकृतपदस्य मूलोक्तस्योद्देश्यपदस्य च प्रयोजनमेकोक्त्या वक्तुं प्रकृतद्वयमित्यत्र वाग्वैचित्र्यसम्पादनायोद्देश्यपदम्। प्रकृतपदेन निर्दिशति प्रकृतेत्यर्थ इति। उद्देश्येति पदम् प्रकृतेतिपदस्यार्थ:–पर्याय इत्यर्थ:।

प्रकृतद्वयमिति– न्यायप्रकृतिपदानुपादाने पर्वतपक्षकवह्निव्याप्यधूमसाध्यकप्रतिज्ञा–लक्षणे वह्निसाध्यकोपनयेऽतिव्याप्ति:, अनुमितौ प्रकृतपदानुपादाने पर्वतपक्षकवह्निसाध्यक–प्रतिज्ञालक्षणे तदुपनयेऽतिव्याप्ति: स्यादिति प्रकृतपदद्वयमवश्यं देयमित्यर्थ:। एकत्र लक्षणे पदद्वयसार्थक्ये तु यद्यभिनिवेशस्तदा पर्वतपक्षकवह्निव्याप्यधूमसाध्यक–प्रतिज्ञालक्षणे न्याये प्रकृतत्वाऽप्रवेशे वह्निसाध्यकोपनयेऽतिव्याप्ति:। अनुमितौ प्रकृतत्वाऽप्रवेशे वह्निव्याप्य–

धूमव्याप्यवानयम् इत्युपनये एवाऽतिव्याप्ति: स्यादिति प्रकृतिद्वयम् व्यावर्तनीयमनुसर्तव्यम्। समुदायार्थमनुवदति तथा चेत्यादि। यादृशपक्षकन्यायावयवत्वम् एतावति कृते पर्वतपक्षक–वह्निव्याप्यधूमसाध्यक–प्रतिज्ञालक्षणस्य पर्वतपक्षक–वह्निसाध्यकोपनयेऽतिव्याप्ति: स्यादिति साध्यमपि यादृशत्त्वेन विशेषितम्। यादृक् साध्यकन्यायेति कृते विषयतात्वावच्छिन्न–पक्षकतदनुमितिविषयतात्वज्ञानजन्यज्ञानीयत्वसाध्यकप्रतिज्ञालक्षणे ज्ञानीयत्वविशिष्टविषयता–तदनुमितिविषयतात्वज्ञानजन्यज्ञानीय–तदनुमिति–विषयतात्वादितिन्यायीयहेत्ववय–वेऽतिव्याप्ति: स्यादिति तद्धर्मावच्छिन्नपक्षकत्वमपि कार्ये तदवयवे वा विशेषणम्। सति च विशेषणे शुद्धविषयतात्वावच्छिन्नपक्षकतदनुमितिविषयतात्व– ज्ञानजन्य– ज्ञानीयत्व–साध्यकन्यायावयवत्वाभावादेव तत्र नाऽतिव्याप्ति:। शुद्धविषयतायां तदनुमितिविषय–तात्वज्ञानजन्यज्ञानीयत्वे साध्ये तदनुमितिविषयतात्वादिति हेतुघटितो न्याय एव न सम्भवति प्रतिज्ञाहेत्वो: पौनरुक्त्यप्रतिहतत्वाद् इति स्वयमेव दीधितिकृताऽभिधास्यते। यदि पुनरुचितानुपूर्वीकोऽसल्लिङ्गकोऽपि न्यायत्वेन तदवयवाश्च प्रतिज्ञात्वादिना सङ्ग्राह्या, अत एव कथायाम् एकतरस्या: स्थापनाया आभासत्वनियमेऽपि न्यायाभ्यां कथारम्भ इत्युपपद्यते, तदा बुद्धिविषयताधूमज्ञानजन्यज्ञानीया धूमादिति न्यायस्य हेत्ववयवे शुद्धविषयता धूमज्ञानजन्यज्ञानीया धूमलिङ्गकानुमितिविषयतात्वादिति–न्यायीयप्रतिज्ञालक्षणाऽतिव्याप्ति–वारणाय तद्धर्मावच्छिन्नपक्षकत्वं न्याये विशेषणम्। तस्य यादृशसाध्यकन्यायावयवत्वम् तादृशसाध्यकशुद्धविषयतापक्षकानुमित्यन्यूनाऽनतिरिक्त–विषयताकज्ञानजनकत्वादेवमनुमितौ तादृशपक्षकत्वमात्रप्रवेशे पर्वतपक्षकवह्नि–साध्यकप्रतिज्ञालक्षणे तत्रत्योपनयाऽतिव्याप्ति: स्यात्। तज्जन्यज्ञानस्याऽपि पर्वतो वह्निव्याप्यधूमवान् इत्यनुमितिसमानविषयकत्वादिति तादृशसाध्यकत्वमनुमितिविशेषणम्। तावन्मात्राभिधाने तु बुद्धिविषयता धूमज्ञानजन्यज्ञानीया धूमादिति हेत्ववयवे च प्रतिज्ञालक्षणमतिप्रसज्येत। हेत्ववयवजन्यज्ञानस्य विषयता धूमज्ञानजन्यज्ञानीयेति तादृश–साध्यकानुमित्यन्तरसमानविषयकत्वादिति तादृशपक्षक–त्वमनुमितिविशेषणम्। वस्तुतोऽनतिरिक्तविषयकत्वं तादृशविषयताकानुमितित्वा–व्यापकविषयताशून्यत्वं, तथा च वह्निसाध्यकानुमितित्वादेरव्यापिका पक्षादिविषयता इति तच्छून्यत्वमसम्भवि स्यादिति साध्यपक्ष–तदवच्छेदक–संसर्गाणां प्रतिस्वं प्रवेश आवश्यक

इति ध्येयम्। धूमादित्यादि आलोको, ज्ञेयम् वस्तु, तेन धूमादितिहेत्ववयवेन आलोकभिन्नवृत्तिज्ञाप्यताया अपि विषयीकरणाद् अनतिरिक्तपदेनैव न तन्निवारणमिति ध्येयम्। साक्षात् पक्षतावच्छेदकरूपेण मतुपा पुनरधिकरणत्वेनैवोपस्थाप्यते। न्यूनतेति—असति पक्षवाचकपदानुषङ्गे पौनरुक्त्यप्रतिसन्धानाभावादबाधितत्वाद्यनपेक्षेणानुमितिसामग्रीन्यूना स्यादिति भाव:।

अत्रेदमवधेयम्— यत्र सम्पूर्णन्यायघटकवाक्यानामनुसन्धानात्मकं हेत्वाद्यवयवे योग्यत्वनिराकाङ्क्षत्वाद्यनुसन्धानस्वरूपं तत: प्रतिज्ञामात्रार्थस्य वाक्यार्थबोध:। तत्राऽनतिरिक्त-पददानेऽपि हेत्ववयवेऽतिव्याप्ति:। जनकपदस्य जनकविषयत्वार्थकत्वावश्यकत्वेन हेत्ववयवादावपि तस्याक्षतत्वात्। अथाऽन्यूनपदोपसंदानेन प्रकृतपक्षे प्रकृतसाध्य-वैशिष्ट्याऽवगाहिशाब्दबुद्धित्वावच्छेदेन यादृशानुपूर्वीज्ञानत्वेन कारणता तद्वत्त्वं विवक्षितमिति न हेत्वादिवाक्येऽतिप्रसङ्ग इति चेत्, तत् किं येन रूपेणावयवत्वं तादृशानुपूर्वीज्ञानत्वेन कारणत्वमुत येन केनाऽपि रूपेण? आद्ये कथं निगमनेऽतिव्याप्ति:, तत्र ह्यवयवत्वम्। तस्माद् वह्निमान् इत्यानुपूर्व्यवच्छेदेन पर्वतो वाह्निमान् इति वाक्यार्थबुद्धिजनकत्त्वम् त्वनुसक्तायमादिपदघटितानुपूर्वीज्ञानत्वेनैवेति वैषम्यात्। अनुषक्तपदस्य निराकांक्षत्वप्रति-संधाने ततो महावाक्यार्थबुद्ध्यभावेन तादृशानुपूर्वीज्ञानस्य कारणत्वावश्यकत्वात्। पौर्वापर्यमेव हि पदानाम् दीधितिकृतां मते आकाङ्क्षा, द्वितीयेऽनुषक्ताऽयंदघटितम् वह्निमत्पदानुपूर्वी-ज्ञानत्वेन वह्निमत्पर्वतमात्रविषयकज्ञानजनकत्वात् तादृशानुपूर्वीमादायाऽनतिरिक्तपददानेऽपि निगमनाऽतिप्रसक्तेर्दुर्वारत्वाऽपत्ति:। अथ न्यायावयवत्त्वप्रयोजकसमुदायत्वावच्छेदेन वह्निमत्-पर्वतबोधकत्वप्रयोजकानुपूर्वीमत्त्वं विवक्षितम्। अयं वह्निमान् इत्यानुपूर्वी तु न न्यायावयव-समुदायत्वावच्छेदेन वर्तते, तस्मादित्यंशे तदभावात्। उत्तरत्व—मध्यमत्व—पूर्वत्वस्वरूपाया: प्रत्येकवर्णवृत्तेरप्यानुपूर्व्या: समुदायत्वावच्छेदेनैव वृत्तिस्वीकारादत एव द्वौ रूपवन्तावित्या-दिकप्रत्यय:। तथा चाऽनतिरिक्तपदाऽदानेऽनुषक्तायंपदघटितानुपूर्वीविशेषो भवति। धूमज्ञाप्यवह्निमत्पर्वतबोधकत्वप्रयोजकोऽवयवत्वावच्छेदक—समुदायत्वावच्छेदेन विद्यमानस्येति निगमनेऽतिव्याप्तिवारणायाऽनतिरिक्तपदम्। तेन च पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहिशाब्दबोधत्वावच्छिन्ना तदितरविषयकत्वादनवच्छिन्ना

या कार्यता तन्निरूपककारणता—प्रयोजकानुपूर्व्याः अवयवत्व—प्रयोजकसमुदायत्वावच्छेदेन वृत्तिर्लभ्यते। अनुषक्तायंपदगर्भानुपूर्वीप्रयोज्यकार्यता तु पक्षतावच्छेदकादीतरहेतुव्याप्यत्व—विषयकत्वावच्छिन्नेति तद्व्युदास इति चेद् एवं सति किमनुषङ्गवेषणेन अयमादिनि—गमनान्तभागे हेत्वन्ते च भागे वर्तमानानुपूर्वीमादाय हेतौ निगमने चातिव्याप्ति—वारणायाऽनतिरिक्तपदमित्येव वक्तुमुचितम्। एवमेवाग्रिमग्रन्था अपि न विचारं सहन्त इति तत्र तत्र सूचयिष्याम इति।

अयं **गोकुलनाथोपाध्यायः** मिथिलायां विद्यातपःसिद्धिविश्रुतवैभवधामनि मंगलवनी (मंगरउनी) नामनि ग्रामे विजृम्भमाणालौकिकानुभावसमवाये धरणीसुर **फणदहान्ववाये** महामहोपाध्यायस्य रुचिपतेर्वृद्धप्रपौत्रः, सदुपाध्यायनीकारापराभिधानस्य हरिहरस्य प्रपौत्रः, सदुपाध्यायरामभद्रस्य पौत्रः, विद्यानिधिपदप्रसाधितस्य नैष्ठिकप्रवर—महामहोपाध्याय—पीताम्बरस्यात्मजो विनायक इवोमादेवीप्रसूतः, अविलम्बसरस्वतीपदवीभृतो महामहोपाध्यायत्रिलोचनस्य महामहोपाध्यायधनञ्जयस्य चानुजो, माहमहोपाध्यायजगद्धरस्य चाग्रजः, सर्वस्वदानकृन्महामहोपाध्यायरघुनाथ—महामहोपाध्यायलक्ष्मीनाथयोर्जनयिता, सुधीधौरेयाणां महामहोपाध्यायरामेश्वरादीनाम् अध्यापकः, स्वदेशे मिथिलामेदिनीमहेन्द्रं खण्डलाबलाकुलकुमुदकलाधरं द्विजराजं **राघवसिंहं**, गढ़वालमण्डलघटक **'टीढ़ी—श्रीनगर'**नरेश्वरं राजन्यवरं **फत्तेसाहं** च समये—समये समुपसृत्य ताभ्यामभिसभाजितो विविधान् विबुधैरपि दुर्बोधान् सकलसंस्कृतानुशासकविषूचीनानिर्वचनीयप्रेक्षासाक्षिणः पुरो निर्देक्ष्यमाणान् प्रबन्धान् खैष्ट्यां सप्तदशशताब्द्याम् पर्यायेण प्राणैषीत्। यद्यप्येतन्निर्मिताः परश्शता ग्रन्थाः, तथाऽपि केषाञ्चन नामानि निर्दिश्यन्ते—

(१) रश्मिचक्रम् (न्यायतत्त्वचिन्तामणिविवरणम्,) २. आलोकविवरणम्—(पक्षधरीय—न्यायचिन्तामण्यालोकविवरणम्) ३. दीधितिविद्योतः (रघुनाथीयचिन्तामणि—दीधितिटीका) ४. न्यायसिद्धान्ततत्त्वम्। ५. दिक्कालनिरूपणम्। ६. लाघवगौरवरहस्यम्। (दरभंगास्थेन मिथिलासंस्कृतशोधसंस्थानेन प्रकाशितम्) ७. कुसुमाञ्जलिविवरणम्। ८. बौद्धाधिकार—विवरणम्। ९. शक्तिवादः। १०. मुक्तिवादः ११. पदवाक्यरत्नाकरः (सम्पूर्णानन्दसंस्कृत—विश्वविद्यालयीयानुसंधानविभागेन प्रकाशितः)।

१२. खण्डनकुठार: (ग्रन्थस्यास्य सम्पादकेन प्रकाश्यमान:)। १३. मिथ्यात्वनिरुक्ति: (अद्वैतमतस्थापना, का०सिंहदरभंगासंस्कृतविश्वविद्यालयेन प्रकाशित:)।

१४. कुण्डकादम्बरी (कादम्बरीनाम्न्यां कन्यायामकाले जाह्नवीजले निमग्नायाम् तत्स्मृति–रक्षायै कृतेष्वन्यतमो ग्रन्थ:। अत्र गणितस्य नूतना उपपत्तय: कुण्डविचारच्छलेन प्रदर्शिता:) १५. कादम्बरीकीर्तिश्लोका:। १६. कादम्बरीप्रश्नोत्तरमाला १८. प्रबोधकादम्बरी (ग्रन्थेऽस्मिन् भूगोलविषयेऽभिनवस्वोपज्ञयुक्तिप्रदर्शनपूर्वकाकर्षणादिसिद्धान्तस्य खण्डनम्, वेदवर्णित–सिद्धान्तस्योपपादनं विद्यते। अयं ग्रन्थ एतद्ग्रन्थसम्पादकेनैव प्रकाश्यमान: वर्तते)। १९. काव्यप्रकाशविवरणम् (सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन वाराणसीस्थेन प्रकाशितम्।) २०. रसमहार्णव: (का०सि० दरभंगाविश्व वि० प्रकाशित:) २१. शिवस्तुति: (अच्युतग्रन्थमालात: प्रकाशिता:) २२. कादम्बरीप्रदीप: (द्वैतनिर्णयटीका, का० सिंह–दरभंगा–सं० वि० प्रकाश्यमानो धर्मशास्त्रग्रन्थ:)।

२३. अशौचनिर्णय:–स्मृतिनिबन्ध:।

२४. मासमीमांसा– (का०सि०द०सं०वि०वि०–प्रकाशिता)।

२५. सूक्तिमुक्तावली– (सम्पूर्णानन्द सं०वि०वि० प्रकाशिता)।

२६. मदालसा नाटकम् (दरभंगा मिथिलाशोधसंस्थानेन प्रकाशितम्)।

२७. अमृतोदयनाटकम्।

२८. आधाराधेयभावतत्त्वपरीक्षा।

२९. एकावली (छन्दोग्रन्थ:)। का०सिंह सं०वि०वि० प्रकाशिता। अभिनवप्रणाल्या रचिता।

अन्येऽपि अनेके ग्रन्था: विभिन्नप्रान्तीयेषु ग्रन्थागारेषु अपूर्णा उपलभ्यन्ते। अनेन सम्पूर्णमेव जीवनम् सारस्वतसमर्चायां यापितम्। तच्चोक्तम् स्वयमेव–

आबाल्यादेकमनसा मया यूयमुपासिता:।
युष्माभि: सर्वविद्याभि: कृतं साहायकं मम।।

अस्मिंश्च नवतिवर्षदेशीय अधिवाराणसि निर्वाणपदवीं भजति विषण्णस्य तच्छिष्यस्य महामहोपाध्यायरामेश्वरशर्मण: श्लोक:–

मातर्गोकुलनाथनामकगुरोर्वाग्देवि! तुभ्यं नम:
पृच्छामो भवतीम् महीतलमिदं त्यक्त्वैव यद् गच्छसि।
भूलोके वसति: कृता मम गुरौ स्वर्गे तथा गीष्पतौ,
पाताले फणिनायके भगवति प्रौढि: क्व लब्धाधिका।।

मासमीमांसायां चोक्तम्—

"अस्मिन्नेवैकत्रिंशदधिकषोडशशताङ्किते शककाले वैशाखो मलमास इति, तदधुनाऽपि सम्भवत्येव सम्प्रति हि शकाब्दा एकत्रिंशदधिकषोडशशती" इति च दृश्यते। स च समयो नवाधिकसप्तदशशती खैष्ट्री तस्मात् खैष्ट्रीं सप्तदशीं परार्धे, अष्टादशीं च पूर्वार्धे शताब्दीमाक्रम्य गोकुलनाथोपाध्यायो मिथिलामहीमण्डलममण्डयद् इति निश्चितम्।

एतेषां निबन्धानां वस्तुविवेचनावैचित्र्यमालोचयन्तो विद्वांस: सर्वप्रबन्धातिशायित्वमञ्जसैव निर्विशङ्कमङ्गीकुर्यु:। सम्पादकोऽयम् महामहोपाध्यायगोकुलनाथशर्मपौत्रस्य महामहोपाध्याय भवानीदत्तशर्मण: पौत्रस्य पौत्रोऽधिकाशीदानीं भगवन्तं भवानीजानिं सेवमानो वर्त्तते।

मैथिलीदिवस:
वैशाखशुक्लनवमी
शाके—१९२२

विदुषामाश्रव:
**रामसेवक झा**
*भूतपूर्वस्नातकोत्तरदर्शनविभागाध्यक्ष: प्राचार्यश्च*
*दरभङ्गास्थ का०सिं०द०सं० विश्वविद्यालयस्य*

# ।। अवयवचिन्तामणि:।।

तच्चानुमानं परार्थं न्यायसाध्यमिति न्यायस्तदवयवाश्च प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि निरूप्यन्ते। तत्र समस्तरूपोपपन्नलिङ्गप्रतिपादकवाक्यं न न्याय:, अत्रैव वाक्येतिव्याप्ते:। किन्तु अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्यं न्याय:।

प्रतिज्ञादिपञ्चवाक्यैरेकवाक्यतया स्वार्थविशिष्टज्ञानं जन्यते। तेन च विशिष्टवै-शिष्ट्यावगाहिमानान्तरमुत्थाप्यते। तेन च चरम: परामर्श उत्पाद्यत इति न्यायजन्यशाब्दज्ञानस्य परामर्शप्रयोजकता।

अनुमिति चरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्यत्वमवयवत्वम्।

अत एव वह्निव्याप्यधूमवानयमिति वाक्ये तदवयवे च न न्यायतदवयव-लक्षणातिव्याप्ति:, तेन परामर्शस्य तदवयवेन च परामर्शजनकस्य जननात्।

यत्तु संक्षेपत: परामर्शप्रयोजकवाक्यत्वेन विशेषाभावात् सोऽपि न्याय एवेति। तन्न। कथायामाकांक्षादिक्रमेणैवाऽभिधानमिति प्रथमं विशिष्टवैशिष्ट्ये आकांक्षा नास्तीति तदभिधाने निग्रहादिति वक्ष्यते। अन्यथा चक्षुरादेरपि परामर्शजनकतया न्यायत्वापत्ति:। आकाङ्क्षाविरहस्तुल्य एव।

अन्ये तु पंचावयववाक्याद् विजातीयमेव शाब्दज्ञानमुत्पद्यते इति तद्धीजनक-वाक्यत्वमेव न्यायत्वम्। एवम् प्रतिज्ञाद्यवयवादपि प्रत्येकं विजातीयं शाब्दज्ञानमिति तत्तद्धी-जनकशब्दत्वमेव तत्तल्लक्षणमिति। तन्न, ज्ञानविशेषजनकत्वं तत्तज्ज्ञानविशेषजनकत्वं च न्याये प्रतिज्ञादौ चानतिप्रसक्तमनुगतरूपमन्तरेण दुर्निरूपमिति। तत्स्वीकारे तस्यैव लक्षणत्वादन्यथा जातिसंकरप्रसङ्ग:।

**इति चिन्तामणौ अवयवलक्षणं समाप्तम्।**

तत्र प्रतिज्ञा न साध्यनिर्देश: साध्यपदेऽतिव्याप्ते:। किन्तूद्देश्यानुमितिहेतुलिङ्गपरामर्श-प्रयोजकवाक्यार्थज्ञानजनकत्वे सति उद्देश्यानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञान-जनकवाक्यत्वम्।

अन्यूनानतिरिक्तपदं विहाय लिङ्गाविषयकत्वं वा ज्ञानविशेषणम्। तेनोदाहणादिव्युदास:। निगमनं च न परामर्शहेतु: अबाधितासत्प्रतिपक्षितत्वज्ञानजनकत्वात्।

हेत्वभिधानप्रयोजकजिज्ञासाजनकवाक्यत्वं वा। लिङ्गाविषयक—लिङ्गिविषयकज्ञान-जनक—न्यायावयववाक्यत्वं वा। इतरावयवानां लिङ्गविषयकज्ञानजनकत्वादिति।

प्रतिज्ञात्वं जाति:, अनुगताननतिप्रसक्ततान्त्रिकव्यवहारादिति केचित्। तन्न, देवदत्त-प्रभवत्वादिना जातिसंकरप्रसङ्गात्। प्रतिज्ञाजन्यं विजातीयं ज्ञानं व्यवहारादिति तज्जनक वाक्यं प्रतिज्ञेत्यपि न, तज्जनकत्वं तज्जनकत्वज्ञानं वा नानुगतरूपकमन्तरेण सम्भवती-त्युक्तस्यानुसरणीयत्वात्।

एतेन शब्दोऽनित्य इति लिङ्गिधीपरवाक्यजन्यज्ञानवृत्ति—कृतकत्वादित्यादिवाक्यजन्य—ज्ञानवृत्ति कृतकत्वादित्यादिवाक्यजन्यज्ञानावृत्तिजातियोगिज्ञानजनकवाक्यं प्रतिज्ञेति निरस्तम्।

ननु प्रतिज्ञा न साधनाङ्गं, विप्रतिपत्तेः पक्षपरिग्रहे तत्र प्रमाणाकाङ्क्षायां हेत्वभिधानस्य प्राथम्यादिति चेन्न, विप्रतिपत्त्यग्रे समयबन्धानन्तरं शब्दानित्यत्वं साधयेति मध्यस्थस्य वादिनो वाऽऽकाङ्क्षायां शब्दानित्यत्वं साध्यं, न च साध्यनिर्देशं विना हेतुवाक्यं निष्प्रतियोगिकमन्वयं बोधयितुमीष्टे। न च वादिवाक्येऽनुपस्थितमपि योग्यतया अन्वेति अतिप्रसङ्गात्।

न च विप्रतिपत्तितः साध्योपस्थितिः। तस्याः प्रतिवादिविप्रतिपत्त्या प्रमाणादिव्यवस्थया चान्तरितत्वात्, परविप्रतिपत्तिं समयबन्धं च विना स्थापनाया अभावात्। विप्रतिपत्ति—वाक्यस्य पक्षपरिग्रहेण पर्यवसिततया निराकाङ्क्षत्वाच्च। आवृत्तौ तु सैव प्रतिज्ञा। न चावयवान्तराद् हेत्वन्वययोग्या साध्योपस्थितिः, नाप्यवयवान्तरेणाऽऽक्षेपात्, साध्यान्वये तदभिधानं तदभिधाने च साध्यान्वय इत्यन्योन्याश्रयात्। तस्मात् प्रतीत्यनुपपत्त्या प्रतीतानुपपत्त्या वा नेहाक्षेपः।

अन्ये तु शब्दाऽनित्यत्वे प्रमाणं वदेति यदि मध्यस्थस्यानुयोगः तथापि प्रमाणमात्रे नाकाङ्क्षा किन्तु विशिष्टे, विशिष्टन्तु विशेषणं साध्यमनभिधाय न शक्याभिधानम्। न च वस्तुतो यत्साध्यं तत्र प्रमाणं वदेति मध्यस्थनियोगः, वादिद्वयमध्ये तदसम्भवात्। तस्मात् साध्याभिधानं विना न हेतोराकांक्षा न वाऽन्वयबोधकत्वमिति प्रतिज्ञा साधनाङ्गमिति।

## इति प्रतिज्ञालक्षणम्।

साध्यनिर्देशानन्तरं कुत इत्याकाङ्क्षायां साधनताव्यञ्जकविभक्तिमल्लिङ्ग—वचनमेवोचितम्। अन्यथाऽनाकाङ्क्षिताभिधाने निग्रहापत्तेः। लोके तथैवाऽऽकाङ्क्षानिवृत्तिरिति व्युत्पत्तेरिति प्रतिज्ञानन्तरं हेतूपन्यासः। प्रतिज्ञावाक्यधीजन्यकारणाकांक्षानिवर्तकज्ञानजनकहेतु विभक्तिमद्वाक्यत्वं वा। पञ्चम्यन्तलाक्षणिकपदवदनुमितिपरवाक्यत्वं वा।

हेतुपदेन ज्ञाने लक्षणा। अन्यथा लिङ्गस्याहेतुत्वेन हेतुविभक्त्यर्थानन्वयात्। तथैवाकाङ्क्षानिवृत्तेः। अनुमितिहेतुज्ञानकरणधूमवत्त्वादिशब्दजन्यज्ञानवृत्तिप्रतिज्ञादिजन्यज्ञानावृत्ति—जातियोगिजनकवाक्यत्वं हेतुत्वमित्यन्ये। जातिं विना केन रूपेण ज्ञानस्यानुमितिजनकत्वम्। वाक्यविशेषजन्यत्वस्यापि जन्यतावच्छेदकरूपापरिचये दुर्ग्रहादित्यपरे। अन्वयव्याप्त्य—भिधायकावयवाभिधायकावयवाभिधानप्रयोजनकज्ञानजनकहेतुत्वप्रतिपादकविभक्ति—मन्यायावयवत्वमन्वयिहेतुत्वम्। एतदेव व्यतिरेकव्याप्त्यभिधायकपदप्रक्षेपात् व्यतिरेकिहेतुत्वम्। अन्वयव्यतिरेकोदाहरणाकाङ्क्षाप्रयोजकतथाभूतावयवत्वमन्वयव्यतिरेकिहेतुत्वम्। यद्वा पक्षसपक्षसतो विपक्षासतो हेतुवचनमन्वयव्यतिरेकि। अंत्यन्ताभावाप्रतियोगिसाध्यसमाना—धिकरणपक्षसपक्षसद्धेतुवचनं केवलान्वयि। यद्वा अनुमितिकारणीभूतपरामर्श—

प्रयोजकशाब्दज्ञानकारणसाध्याविषयकशाब्दधीजनकप्रतीतान्वयसाध्यसाधनवाचक–हेतुविभक्तिमच्छब्दत्वमन्वयिहेतुत्वम्। एतदेवाप्रतीतान्वयसाध्यप्रसाधनेतिविशेषणाद् व्यतिरेकिहेतुलक्षणम्। कथायां धूमादित्येव प्रयोक्तव्यं न तु धूमवत्त्वादिति मतुपो व्यर्थत्वात्। सामान्यवत्त्वे सति बाह्यकरण–प्रत्यक्षत्वादइत्यपार्थकम्। विभक्त्युपस्थापितहेतुत्वेन सामान्यवत्त्वस्य विभक्त्यन्तरावरुद्धस्य अन्वयादिति केचित्। तन्न, सति सप्तमीबलात् सामान्यवत्त्वस्य बाह्यकरणप्रत्यक्षत्वस्य च सामानाधिकरण्योपस्थितौ विशिष्टे हेतुत्वान्वयात्। तथैव व्युत्पत्तेः। नह्ययमर्थोऽस्मान्नावगम्यते इति।

## इति तत्त्वचिन्तामणौ हेतुग्रन्थः।

हेतावुक्ते कथमस्य गमकत्वमित्याकाङ्क्षायां व्याप्तिपक्षधर्मतयोरुपदर्शनप्राप्तौ व्याप्तेः प्राथम्यात् तत्प्रदर्शनायोदाहरणम्। तत्रानुमितिहेतुलिङ्गपरामर्शपरवाक्यजन्यज्ञानजनकव्याप्य–त्वाभिमतवन्निष्ठनियतव्यापकत्वाभिमतसम्बन्धबोधजनकशब्दत्वमुदाहरणत्वम्।

सामान्यलक्षणे साध्यसाधनाभावसम्बन्धबोधजनकत्वम्। साध्यसाधनाभाव– सम्बन्ध–बोधजनकत्वं च विशेषलक्षणद्वयम्। न्यायावयवदृष्टान्तवचनमुदाहरणमिति तु न, दृष्टान्त–प्रयोगस्य सामयिकत्वेनासार्वत्रिकत्वात् यो यो धूमवान् सोऽग्निमानित्येव व्याप्तिप्रतीतेः। नापि प्रकृतानुमितिहेतुलिङ्गपरामर्शपरवाक्यजन्यज्ञानविषयव्याप्त्युपनायकं वचनं तत्। उपनयातिव्याप्तेः। अत एवोपनयाभिधानप्रयोजकजिज्ञासाजनकवाक्यमुदाहरणम्। एतदेवान्वय–व्यतिरेकव्याप्तिविषयकत्वविशेषितविशेषलक्षणद्वयमित्यन्ये। अत्र च व्यभिचारवारणाय वीप्सामाहुः। यत्र च सामानाधिकरण्यादेव व्याप्तिस्तत्र च वीप्सा। केवलान्वयिन्यभेदानुमाने च वीप्सायामपि व्यभिचारतादवस्थ्यमिति तु वयम्। वीप्सा च यत्पदे, न तु तत्पदेपि। विरूपोपस्थितयोरपि तत्पदेन परामर्शाद् बुद्धिस्थवाचकत्वादिति न व्युत्पत्तिविरोधः। यथा– 'यद् यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्म' इत्यत्र। इदं च साध्यसाधनोभया–श्रयविकलानुपदर्शितान्वयविपरीतोपदर्शितान्वयानुपदर्शितव्यतिरेकविपरीतोपदर्शि व्यतिरेक–भेदाभासरूपमिति।

## इति तत्त्वचिन्तामणावुदाहरणग्रन्थः।

उदाहरणानन्तरं भवतु व्याप्तिस्तस्थापि व्याप्तं किं पक्षे वर्तते, न वेत्याकाङ्क्षायां भवतु व्याप्तस्य पक्षधर्मत्वप्रदर्शनायोपनयः। तत्रानुमितिकारणतृतीयलिङ्गपरामर्श–जनकावयवत्वमुपनयत्वमिति सामान्यलक्षणम्। साध्यव्याप्यविशिष्टपक्षबोधकावयवत्वम्। साध्याभावव्यापकाभावप्रतियोगिमत्पक्षबोधकावयवत्वं च विशेषलक्षणद्वयम्। उदाहरणान्त एव प्रयोग इति न वाच्यम्। तृतीय लिङ्गपरामर्शस्य व्याप्तिपक्षधर्मतावगाहिनोऽवयवान्तराद–लाभात्। तदनभ्युपगमेपि पक्षधर्मताया अलाभात्। न तु हेतुवचनादेव तदवगमः। तस्य को हेतुरित्याकाङ्क्षायां प्रवृत्तत्वेन हेतुस्वरूपोपस्थापकस्यातत्परत्वात्। वादिवाक्यादेवाक्षेप इति

चेन्न, तदर्थस्यासिद्धत्वेन अनाक्षेपकत्वात्। अन्यथा प्रतिज्ञावाक्यादेव सर्वाक्षेपे अवयवान्तरविलयात्। प्रतिपाद्यानां स्वत एव तदवगम इति चेन्न, तेषां व्युत्पन्नाव्युत्पन्नतया सर्वत्र तदसम्भवात् प्रतिपादकेन स्वव्यापारस्य निर्वाहयितुमुचितत्वाच्च। अन्यथा अवयवान्तरेऽप्येवं प्रसङ्गादिति।

## इति तत्त्वचिन्तामणावुपनयग्रन्थ:।

उपनयानन्तरं निगमनम्। तच्चानुमितिहेतुलिङ्गपरामर्शप्रयोजकशाब्दज्ञानकारणव्याप्ति–पक्षधर्मताधीप्रयुक्त–साध्यधीजनकवाक्यम्। न च व्याप्तिपक्षधर्मतयोक्तचतुर्भिरिवावयवै: पर्याप्ते: किं तेनेति वाच्यम्, अबाधितासत्प्रतिपक्षितत्वयोरलाभे चतुर्णामपि अपर्यवसानात्। अथाभिधानाभिधेययो: व्याप्तिपक्षधर्मतावल्लिङ्गप्रतिपादनादेव पर्यवसानेन अवयवान्तराणां निराकाङ्क्षत्वम्, विपरीतशङ्कानिवृत्तेरपि तत एव लाभाद्, अन्यथा निगमनेनापि तदवारणात्? नहि तद्विशेषदर्शनमनादृत्यैव तन्निवर्तकं सिद्धनिर्देशतया वारयतीति चेन्न, स्वरूप–मात्राभिधानात्। साध्यत्वानुपस्थितौ तस्मादिति हेतुविभक्त्यनन्वयप्रसङ्गाच्चेति चेन्न, व्याप्तिपक्षधर्मताज्ञानेपि बाधसत्प्रतिपक्षबुद्धे: साध्यज्ञानेनानुत्पत्तिदर्शनात्, तदभावाबोधने समीहितानिर्वाहात्। अथ बाधादिविरहस्य प्रयोजकत्वं न तु तद्बोधस्य मानाभावादसिद्धेश्चेति किमर्थं बाधादिविरहो बोधनीय इति चेन्न यदवगमे सति यन्न भवति तत्तदभावज्ञान–साध्यमिति व्याप्ते:। न चानन्वय: तस्मादित्यन्वयबलादेव हेत्वनाकाङ्क्षितत्वलक्षणसिद्धत्वज्ञानात् न त्वन्वयात् प्राक्। इह केचिद्–यथा तस्मादिति सर्वनाम्ना हेतो: परामर्श: पूर्वोक्ताशेषरूप–लाभाय तथा साध्यांशस्यापि तथेति सर्वनाम्ना सिद्धस्थल इव विरोधादिवारणाय युक्त इत्याहु:, तन्न तथेति स्वरूपे, प्रकारे, सादृश्ये वा? आद्ये तथा चायमिति प्रक्रमात् तथेति हेतुमानित्यर्थ: स्यात्। तथा चानन्वय:। हेतुमत्त्वादेव हेतुमत्त्वमित्यन्वितम्। न द्वितीय:, सामान्येन पक्षस्याप्यन्वयव्याप्तौ प्रवेशात्, तत्प्रकारान्वय: तत्रैवेत्यनन्वयात्। अत एव न तृतीयोपि। अभेदानुमाने च अन्वयिनि तस्मात् तथेति सादृश्यान्वयाभावात्, बहूनां च प्रक्रमे विशेष्यानन्वयात्, वादिवाक्ये च योग्यतान्वयेऽतिप्रसङ्गात्। तस्मादित्यत्र तु हेतुविभक्त्यर्थानन्वयादेव विशिष्य सिद्धान्तादवगम्यते। पूर्वं साध्यतयोक्तस्य समर्थहेतु–सम्बन्धेन पुनरुत्कीर्तनात्, अन्यथा तद् वैयर्थ्यात्। संशयप्रयोजनादयस्त्ववयवलक्षणाभावादेव नावयवा:। किन्तु न्यायाङ्गतया न्यायान्तर्गतत्वेनोपयुज्यन्त इति नाधिक्यम्, कण्टकोद्धारस्य च सार्वत्रिकत्वं समयाविशेषोपयोगित्वादिति।।

## इति गङ्गेशोपाध्यायकृतौ तत्त्वचिन्तामणौ अनुमानपरिच्छेदे अवयवग्रन्थ: सम्पूर्ण:।।

—०००—

श्री गणेशाय नमः

# अनुमानचिन्तामणौ

## अवयव—प्रकरणम्

### (दीधितिविद्योतसहितम्)

**चिन्तामणिः**

तच्चानुमानं परार्थं न्यायसाध्यमिति न्यायस्तदवयवाश्च प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि निरूप्यन्ते। तत्र समस्तरूपोपपन्न—लिङ्गप्रतिपादकवाक्यं न न्यायः, अत्रैव वाक्येऽतिव्याप्तेः। किन्तु अनुमिति—चरम—कारण—लिङ्गपरामर्श—प्रयोजक—शाब्दज्ञानजनकवाक्यं न्यायः। प्रतिज्ञादिपञ्चवाक्यैरेकवाक्यतया स्वार्थविशिष्टज्ञानं जन्यते। तेन च चरमः परामर्श उत्पाद्यत इति न्यायजन्यशाब्दज्ञानस्य परामर्शप्रयोजकता।

**दीधितिः**

उचितानुपूर्वीक—प्रतिज्ञादिपञ्चक—समुदायत्वं न्यायत्वम्। प्रतिज्ञात्वादिकं पुनरुदासीनवाक्यवारकन्यायान्तर्गतत्वशून्यमेवात्रोपादेयमिति नान्योन्याश्रयः। साध्यादिभेदनियन्त्रिताश्च प्रतिज्ञादयो वाच्या इति विभिन्नसाध्यादि—पक्षक—प्रतिज्ञादिसमुदाये नातिव्याप्तिः। व्याध्यादेरिव साध्यादेरप्यननुगमादननुगमो न्यायादेरपीष्यत एव। एतेन प्रतिज्ञानिगमनयोरुदाहरणावयवान्तरयोश्च न सम्भूयैकार्थप्रतिपादकत्वम्, द्रागेव तु पञ्चानामवयवानाम्, परन्तु प्रतिज्ञाहेत्वोः कथञ्चिदुपनयनिगमनयोः। एकवाक्यताव्यवहारस्तु विशिष्टैकार्थप्रतिपत्तिपरता—मात्रेण। तादृशपरामर्शप्रयोजकत्वञ्च यदि तद्विषयतत्तत्पदोपस्थापकतया तदा उदाहरणोपनययोरेव तत्पर्यवस्यति। अथ तदानुकूल्यमात्रेण, तदा को वह्निमान्, कुतो धूमवत्त्वादित्यादेरपि तथात्वमित्यादिकं समाहितम्।

विद्योत:

ओं नम: शिवाय

चिन्तामणिप्रकाशेन निरस्ततमसो मम।
न्यायो गोकुलनाथस्य स्फुरत्ववयवैस्सह।।

अनुमितिर्द्विविधा – स्वार्था परार्था च। स्वार्थत्व–परार्थत्वे पुनरनुमितित्वव्याप्ये जाती। तत्र स्वार्थानुमितिम्प्रति कारणता परामर्शस्याप्रामाण्यशङ्काकलङ्कशून्यव्याप्ति–विशिष्ट– पक्षधर्मतानिश्चयत्वादिना पूर्वमुपपादिता। परार्थानुमितौ न तथाविधपरामर्श: कारणम्, वादिवाक्यप्रयोज्यपरामर्शे धर्मिण्यप्रामाण्यशङ्कावतोऽपि वादिनो मध्यस्थस्य वा तथाविधानुमित्युदयात्। न च परामर्शसामान्यकारणतायामेव न्यायप्रयोज्य–परामर्श– विषयकाप्रामाण्यव्यक्तीनामप्रवेशादनुमितिसामान्यसामग्र्यैव परार्थानुमिति–रप्युपपद्यत इति वाच्यम्, तत्तत्परामर्शावच्छिन्न– धर्मिकाणामप्रामाण्यप्रकारकाणां ज्ञानानामनुगतरूपालाभेऽपि धूमज्ञानत्वा– वच्छेदेनाप्रामाण्यप्रकारकाणां धूमप्रकार–तानिरूपित– विशेष्यतात्वावच्छेदेन धूमाभाववद्वृत्तित्वावगाहिनां धूमपरामर्शत्वावच्छेदेन व्यधिकरणप्रकारावच्छिन्न– विशेष्यताकत्वावगाहि– ज्ञानानाञ्चानुगतरूपा–वच्छिन्नाभावस्यैव परामर्शसामान्यकारणतायामनुप्रवेशात्। सत्यपि तादृशाप्रामाण्यज्ञाने न्यायप्रयोज्यपरामर्शात्परार्थानुमितेरुत्पादात् स्वार्थ–परार्थानुमित्योर्विभिन्न–सामग्रीप्रयोज्य–जातिद्वयाभ्युपगमावश्यकत्वात्। ननु तथापि धूमपरामर्शस्य धूमलिङ्गकानुमितिसामान्यं प्रत्येव जनकत्वम्, अप्रामाण्यशङ्का तु धूमलिङ्गक–स्वार्थानुमितिं प्रत्येव प्रतिबन्धिका, नतु परार्थानुमितिम्, न्याय–प्रयोज्य–परार्थपरामर्शात् परार्थानुमितिरुपपद्यत इति चेत् न, एवमपि सति प्रात्यक्षिकादौ वह्निव्याप्य–धूमवानयमित्याप्तवाक्यजनिते वा परामर्शे सत्यामप्रामाण्यशङ्कायां स्वार्थानुमित्यनुत्पादेऽपि परार्थानुमित्युत्पादप्रसङ्गात्। अतो मानसत्वावान्तरवैजात्य–विशेषेण न्यायप्रयोज्य: परामर्शो विशिष्य परार्थानुमितौ कारणम्। अप्रामाण्यशङ्काविरहो न कारणम्, न वा तत्त्वावच्छेदक इत्यभ्युपेयम्, अन्यथानुपपत्ते:। स च विजातीय: परामर्श: तावदर्थोपस्थितिमात्र सहितेन मनसा केवलं न जननीय:, चक्षुरादिना न्यायभिन्नेन वा शब्देनोपस्थितेषु व्याप्तिपक्षतालिङ्गेषु तथाविधपरामर्शोत्पत्तिप्रसङ्गात्, किन्तु वह्निव्याप्यधूमवान् पर्वत इत्याकारे विजातीयपरामर्शे पर्वतपक्षक–वह्निसाध्यकधूमलिंगकन्यायेन सम्भूय जनितो

महावाक्यार्थबोधस्तत्त्वेन जनकः, यदाहुर्मिश्राः— न्यायजन्यमहावाक्यार्थज्ञानस्य तु तादृशज्ञानत्वेनैन जनकत्वम्, वाद्युक्तप्रयोगज्ञान एवोक्तपरामर्शसामग्रीसत्त्वात्, अन्यवाक्याद्वह्निव्याप्यधूमवानिति—परामर्शस्यैवाहत्योत्पाद इत्यादीति दिक्।

इत्थञ्च—न्यायजन्यमहावाक्यार्थज्ञानेन विजातीये परामर्शे जननीये समयबन्धविशेषस्य ज्ञानं सहकारीत्युपाध्यायाः, व्यापार इति मिश्राः। समयस्तु परामर्शस्यानुमितेर्वा प्रयोजकत्वस्वरूपो यादृशानुपूर्वीक—वाक्यत्वावच्छेदे—नावगतस्तादृशानुपूर्वीकवाक्यजनितो महावाक्यार्थबोधः परामर्शप्रयोजकः, तथा हि—प्रतिज्ञादिरुदाहरणान्तो वाक्यकलापः परामर्शविशेषस्यानुमितिविशेषस्य वा प्रयोजक इति समये गृहीते प्राभाकराणां तथाविधवाक्येनैव, उदाहरणोपनयावेव तथेति ज्ञानवतां बौद्धानां (बाह्यानां) ताभ्यामेव विषयसंशयादयो दशवाक्यसन्दर्भाः परार्थं प्रयोजयन्तीति निश्चयवतो जरन्नैयायिकादेस्तैरेव दशभिर्वाक्यैर्जनितो महावाक्यार्थबोधः परामर्शम्प्रति तृणारणिमणिन्यायेन जनकः, तत्तद्दर्शन—समय बन्धवशात्सर्वोऽपि न्याय एव। परन्तु पञ्चावयव—वाक्यजनिता भगवदनुमितिरदृष्टद्वा—रात्मसाक्षात्कारस्योपकरोतीत्याकरानुसारिणः काश्यपाङ्गिरसा निर्दिशन्ति। अत एव प्रयत्न—साध्य—प्रश्नवाक्यादिक्रमेण श्रुतिवाक्योत्पत्तिद्वारा श्रवणस्येव तथैव न्यायवाक्योत्पत्तिद्वारा मननस्यापि कृतिसाध्यत्वम् 'मन्तव्य' इति श्रुत्या प्रतिपाद्यते। एवम्—स्थिते निरूपितानां व्याप्ति—पक्षधर्मतादीनामेककार्यानुकूलत्वेन निरूपितपरामर्शस्य हेतुत्वेन वा सङ्गत्या न्यायं निरूपयितुं निरुक्तसङ्गतिं सूचयति मूले—तच्चानुमानं परार्थं न्यायसाध्यमिति—परार्थनुमानं परार्थानुमित्युपहितः परामर्शः, न्यायसाध्यं न्यायजन्यमहावाक्यार्थज्ञानजन्यम् अथवा परार्थमनुमानम् परार्थानुमितेः सव्यापारकम् कारणम् व्याप्तिमपि विषयीकुर्वन् महावाक्यार्थज्ञानम्, तथा च निरूपितानुमाने जनकत्वमपि न्यायस्य संगतिः। किन्त्वनुमितिचरमेति स्वार्था परार्था चेति विभक्तयोरनुमित्योर्यत् चरमं—परार्थानुमितिस्तत्कारणं यो लिङ्गपरामर्शो—विजातीयं व्याप्तिविशिष्टपक्षधर्मताज्ञानम् तस्य प्रयोजनकम् यच्छाब्दज्ञानं तज्जनकं वाक्यं न्यायः। यत्र वह्निव्याप्यधूमवान् पर्वत इति परामर्शस्ततःस्वार्थानुमितिस्तत्रत्यवाक्येऽतिव्याप्तिवारणार्थं चरमेति, अनुमिति—चरमकारणलिङ्गपरामर्शत्वेन मानसत्वव्याप्यो वैजात्यविशेष उपलक्ष्यते, अत्र—तज्जातीयम्प्रति प्रयोजकत्वं जनकत्वमेव प्रकृते विवक्षितम्,

न्यायजन्यमहावाक्यार्थज्ञानस्य साक्षादेव तादृशपरामर्शकारणत्वात्। तेन चेत्यादिमूलं तु तेन न्यायजन्यमहावाक्यार्थज्ञानेन पक्षे व्याप्तिविशिष्टहेतोर्वैशिष्ट्यावगाहिनी या मितिस्तस्या: कारणान्त र्मन: उत्थाप्यते—स्वात्मकसहकारिसम्पन्नं क्रियत इति व्याख्येयमित्युपाध्याय:। प्रयोजकत्वम् सव्यापारकारणत्वं न्यायजन्य महावाक्यार्थज्ञानेन न्यायविशेषोऽनुमितिविशेषस्य प्रयोजक इति स्मरणमुद्बोधकविधया जन्यते तदेव स्मरणं व्यापारमासाद्य महावाक्यार्थधी: परामर्शविशेषमुत्पादयति, तेन चेत्यादिमूलस्य तु न्यायत्वविशिष्टेऽनुमितिविशेष—प्रयोजकत्ववैशिष्ट्यावगाहि—मानान्तरमनुभवान्यज्ञानमुत्थाप्य इति मिश्रा:। युज्यते चैतत्— अत एव समयबन्ध—वाक्येऽतिव्याप्तिवारणार्थं शाब्दत्वमपि ज्ञाने विशेषणमर्थवत्, अन्यथा समयबन्धवाक्यजन्यशाब्दबोधोऽपि पञ्चावयव—वाक्यमनुमिति—प्रयोजक इत्याकारक: समानाकारकस्मरणद्वारा परार्थ—परामर्शप्रयोजक इति तज्जनकवाक्येऽतिप्रसंगात्। शाब्दपदोपसन्दाने च शाब्दबोधत्वेन प्रयोजकता लभ्यते। समयबन्धग्रहस्तु शब्दप्रत्यक्षादिसाधारणज्ञानत्वेन प्रयोजको न तु शाब्दत्वेन, तदुक्तमालोके "न च शाब्दोपादानेऽपि एष दोष:। शाब्दत्वेन तादृशप्रयोजनकत्वस्य विवक्षितत्वात्, न च योग्यताज्ञानं यथा योग्यताज्ञानत्वेन जनकत्वादिति"। अत्र योग्यतापदम्— समयबन्धपरमित्यवधेयम्।

**अथोपाध्यायमतेऽपि** यत्र समयबन्धवाक्यस्य पञ्चावयववाक्यस्य चैकं समूहालम्बनस्मरणमथ न्यायार्थस्य पञ्चावयववाक्यत्वावच्छेदेनानुमिति—प्रयोजकत्वावगाही समूहालम्बन: शाब्दबोधस्तत:परार्थपरामर्शस्तत्रत्य—समयबन्धवाक्येऽतिव्याप्तिवारणाय शाब्दपदमानुपूर्वीविशेषलाभाय च वाक्यपदम्, तथा च यादृशानुपूर्वीकवाक्यजन्यवाक्यार्थबुद्धित्वावच्छेदेन परार्थानुमितिजनकत्वं तादृशानुपूर्वीमत्त्वं न्यायप्रवृत्तिनिमित्तं लभ्यते। अवश्यं चेदमन्यैरपि विवक्षणीयमिति चेत्—तदा भवतु प्रयोजकपदं जनकार्थकमस्तु च समयज्ञानं सहकारि न तु व्यापार:। इदञ्च सर्वदर्शनसाधारणं न्यायलक्षणम्। त्रिषु द्वयोर्वावयवयो: पर्याप्तानुपूर्वीकस्यापि वाक्यस्य तत्तत्समयग्रहसहकारेण परार्थपरामर्शप्रयोजकत्वात्। अत **एवात्मतत्त्वविवेकादौ** यत्सत्तत्क्षणिकं, संश्च विवादाध्यासित: शब्दादिरिति द्व्यवयवेनैव न्यायकथा परिदृश्यते। नन्वेवम् पर्वतेऽग्निर्धूमो यतो धूमो वह्निमन्मात्रवृत्तिरस्ति च धूमे पर्वतवृत्तित्वम्, तस्मादग्नि: पर्वतवृत्तिरिति

वाक्येऽतिव्याप्तिरुद्भाविताऽऽलोककारैर्विरुद्धयेत तद्वृत्तेरप्यानुपूर्व्याः समयग्रहसहकारेण परार्थपरामर्शप्रयोजकतया तादृशवाक्यस्य न्यायत्वसम्भवादिति चेत् न, सर्वदर्शनसम्प्रदायविरुद्धानुपूर्वीक–वाक्यजन्य– वाक्यार्थग्रहस्य परार्थपरामर्श–प्रयोजकत्वस्य तत्र तादृशानुपूर्वीक– वाक्यमनुमिति–प्रयोजकमिति समयबन्धग्रह–सहकारितायाश्च प्रमाणाभावप्रतिहतत्वात्। अन्वीक्षादर्शने न्यायपदपरिभाषा–प्रवृत्तिनिमित्तन्तु सूत्रकाराभ्युपगत– समयग्रह– महकारेण यादृशानुपूर्वीक–वाक्यजन्यवाक्यार्थबुद्धित्वावच्छिन्नं परार्थपरामर्शं जनयति तादृशानुपूर्वीमत्त्वम्, तेन रूपेणोद्दिष्टस्यैव न्यायस्यावयवाः प्रतिज्ञावाक्ये विभक्ता इति न न्यूनत्वं नाधिक्यमिति दिक्।

ननु स्यादिदं लक्षणं यदि परार्थपरामर्शं प्रति पर्वतो वह्निमानित्यादिवाक्य–पञ्चकघटितानुपूर्वीविशिष्टवाक्यजन्य– शाब्दबोधत्वेन कारणता स्यान्न च तथा–पृथिवी द्रव्यं गुणादित्यादिन्यायप्रयोज्यपरामर्शे व्यभिचारात्। पर्वतो वह्निमान् इत्यादिवाक्यार्थज्ञानाद् द्रव्यत्वव्याप्यं पृथिवीत्ववानयम– भावव्याप्यवानयं वह्निव्याप्यधूमवन्महानसमित्यादि–परामर्शोत्पत्ति–प्रसंगात्। हेत्वादिवाक्येष्वव्युत्पन्नस्य प्रतिज्ञावाक्यमात्रे व्युत्पन्नस्य न्यायेन जनिते प्रतिज्ञार्थमात्रविषयकबोधे तदुत्पत्त्यापत्तेः, प्रकारान्तरेण व्याप्त्याद्युपनयसम्भवात्। न चानुपूर्वीपर्याप्त्यधिकरणजन्यत्वं विवक्षितमुत्तरत्वपूर्वत्वस्वरूपानुपूर्व्याः प्रत्येकवर्णपर्याप्तवात्, न्यायीयवर्णसमुदायत्वेन च महावाक्यार्थबोधेऽप्यजनकत्वात्, वर्णानामकारणत्वाच्च। अथ वह्निव्याप्यधूमवान् पर्वत इत्याकारक– परार्थपरामर्शत्वावच्छिन्नं तद्विशेषं वा प्रति पर्वतो वह्निमानित्यादि–वाक्यपञ्चकघटकानुपूर्वीज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यत्वाधिकरण–शाब्दबुद्धित्वेन कारणता। प्रतिज्ञार्थमात्रविषयक–शाब्दबोधस्तु न तादृशानुपूर्वीज्ञानत्वशिशिष्टजन्य इति चेत् वह्न्यादिपदे घटवाचकत्वभ्रमवतोऽपि वह्निपरामर्शोत्पत्तिप्रसंगात्। यदि च पक्षे वह्निसंसर्गावगाहित्वमपि वाक्यार्थबोधे विशेषणम्, तदापि यत्र न्यायस्य न्यायभिन्नवाक्यस्य च समूहालम्बनम्, वह्न्यादिपदे च वह्नयवाचकत्वभ्रमः न्यायभिन्नवाक्यशक्त्या च वह्निमत्पर्वतादि–धूमहेत्वादिविषयकघटादिपरामर्शजनको वाक्यार्थबोधस्तत्र वह्निव्याप्यधूम–वत्तापराशर्शाप्रसङ्गः। अथ वह्निव्याप्यधूमवान् पर्वत इति परामर्शत्वं तद्विशेषत्वं वा जन्यतावच्छेदकम्, पर्वतो वह्निमान् धूमादित्यादिवाक्यपञ्चकपर्याप्ता–

नुपूर्वीज्ञानत्वावच्छिन्नकारणतानिरूपिता धूमज्ञानजन्यज्ञानविषय–वह्नि–मत्पर्वतादि–विशिष्टार्थावगाहिवाक्यार्थबुद्धित्वावच्छिन्ना या जन्यता तच्छालिशाब्दबुद्धित्वेन कारणत्वम्, न्यायभिन्नवाक्यार्थबोधत्वावच्छेदेन न्यायवृत्त्यानुपूर्वीज्ञानत्वेन न कारणत्वमतस्तद्व्युदास इति चेत् न; न्यायजन्यवाक्यार्थबोधेऽपि वाक्यपञ्चक–पर्याप्तानुपूर्वीज्ञानत्वेन कारणत्वाभावात्, प्रकृतिप्रत्यययोरानुपूर्वीज्ञानस्यैव ताद्रूप्येण कारणत्वम्, विभक्त्यन्तानामानुपूर्वीज्ञाने पुनरन्यथासिद्धमित्यभ्युपगमात्। अथ पर्वतपदाव्यवहितविसर्गस्य वह्निमानित्यानुपूर्व्या धूमादित्यानुपूर्व्याश्चाविशेषेऽपि धूमात्पर्वतो वह्निमानिति वाक्यात् धूमज्ञानज्ञाप्यवह्नित्वावच्छिन्न–विधेयतानिरूपितपर्वतत्वावाच्छिन्नोद्देश्य–ताकान्वयबुद्धेरनुत्पत्त्या निरुक्तबुद्धौ पर्वतो वह्निमान् धूमादित्यानुपूर्वीज्ञानत्वेन कारणत्वमावश्यकमिति चेत्–अस्त्वेवमपि प्रतिज्ञाहेतुभ्यामुपनयनिगमनाभ्यां सम्भूय वाक्यार्थद्वयमुदाहरणेन च खण्डशो वाक्यार्थत्रयं प्रतिपाद्यत इति पञ्चानां वाक्यानामानुपूर्वीपञ्चकमेव प्रत्येकं धूमज्ञानज्ञाप्यवह्निमान् पर्वत इति यो यो धूमवानिति धूमवान् धूमव्यापकवह्निमानिति, महानसं धूमवद् धूमव्यापक–वह्निमदिति वह्निव्याप्यधूमवान् पर्वतो निरुक्तरूपोपपन्नधूमज्ञानज्ञाप्यवह्निमानिति वाक्यार्थबोध–पञ्चके कारणं, न तु प्रतिज्ञादिपञ्चकपर्याप्तानुपूर्वीज्ञानं कुत्रचिदिति तादृशानुपूर्वीज्ञानत्वावच्छिन्नकारणातानिरूपित–कार्यत्वाधिकरणशाब्दबुद्धेरप्रसिद्ध्या तद्घटितं लक्षणमसम्भवीत्याशङ्कायां समाधत्ते– **प्रतिज्ञादिपञ्चेति**– पर्वतो वह्निमान् धूमादिति यो यो धूमवानिति स स वह्निमानिति यथा महानसमिति तथा च पर्वतस्तस्माद्वह्निमानिति पञ्च वाक्यानि परस्परव्यवकलितस्वार्थबोधकानि तैरेकवाक्यतया परस्परसहकारेण निरुक्तैः पञ्चभिः स्वार्थैर्विषयतया विशिष्टं ज्ञानं समूहालम्बनात्मक–शाब्दबोधो जन्यते, तेन च मानान्तरमनुमित्युपहितायाः पंक्षे व्याप्तिविशिष्टवैशिष्ट्यावगाहिन्या मितेः परार्थपरामर्शस्य कारणम् मन उत्थाप्यते कार्यप्रवणीक्रियते, तेन मनसा चरमः परामर्शः चरमगणितानुमितिजनको विलक्षणः परामर्श उत्पाद्यते। तथा च पर्वतो वह्निव्याप्यधूमवानिति परार्थपरामर्शे पर्वतोवह्निमान् धूमादित्यानुपूर्वीज्ञानत्वावच्छिन्न– कारणता–निरूपिता या धूमज्ञानज्ञाप्यवह्निमत्पर्व–तविष्येकत्वावच्छिन्ना कार्यता, याश्चैवंविधाश्चतस्रोऽपराः कार्यतास्तावत्कार्य–तापञ्चकविशिष्टं यत्पर्वत इत्यादि तस्मात्तथेत्यन्तमहावाक्यपर्याप्तानुपूर्वी–

ज्ञानाव्यवहितोत्तरोत्पत्तिकशाब्दं ज्ञानं तत्त्वेनैव कारणत्वमिति महानुपूर्वीज्ञान–स्यान्यथासिद्धत्वेऽपि न क्षतिः। यादृशानुपूर्वीज्ञानाव्यवहितोत्तरोत्पत्तिकशाब्दबुद्धित्वेन परार्थपरामर्शत्वावच्छिन्नं प्रति जनकत्वं तादृशानुपूर्वीमत्त्वं न्यायत्वमपि न दुर्वचम्, जनकपदस्याव्यवहितपूर्वावर्त्तिपरत्वादिति भावः। न्यायजन्यस्य न्यायवृत्ति–महानुपूर्वीज्ञानाव्यवहितोत्तरोत्पत्तिकस्य परामर्शं प्रति प्रयोजकतया जनकता, सा च साक्षात्सव्यापारिका वेत्यन्यदेतत्।

**चिन्तामणिः**

**अनुमिति– चरमकारणलिङ्ग–परामर्शप्रयोजक–शाब्दज्ञान–वाक्यत्वमवयवत्वम्।**

**दीधितिः**

**अवयवत्वन्तु न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वम्। प्रतिज्ञाद्यघटकत्वे सति उभयघटक–भागद्वयाघटितत्वं वक्तव्यम् उभयञ्च प्रतिज्ञाहेतू, हेतूदाहरणे, उदाहरणोपनयौ, उपनयनिगमन इति विशिष्य वक्तव्यमिति।**

**दीधितिविद्योतः**

अन्वीक्षादर्शनप्रसिद्धस्य न्यायस्यावयवान् लक्षयति– अनुमितीति, परार्थपरामर्शम्प्रति न्यायसूत्रकार–सम्प्रतिपन्न– समयग्रहसहकारेण जनकं शाब्दमहावाक्यार्थ–समूहालम्बनं ज्ञानं प्रथमशाब्दज्ञानान्तस्यार्थः, यदाहुः– अनुमिति–चरमकारणलिङ्ग–परामर्श–प्रयोजक–शाब्दज्ञानत्वेन न्यायजन्यज्ञानस्य विवक्षितत्वादिति मिश्राः। तज्जनकं तदव्यवहितपूर्ववर्ति यच्छाब्दं– शब्दविषयकं ज्ञानं, यादृशानुपूर्वीज्ञानाव्यवहितोत्तरोत्पत्तिक–शाब्दज्ञानत्वेनानुमितिचरमकारणलिंग–परामर्शजनकत्वं तादृश्याः पञ्चावयवघटितानुपूर्व्या ज्ञानमिति यावत्, तज्जनकं तद्विषयताव्यापकविषयताकम्, तेन न्यायानुपूर्वीघटकानुपूर्वीकत्वं लभ्यते। तदेव न्यायान्तर्गतत्वम्, तावन्मात्रप्रतिज्ञैकदेशे प्रतिज्ञाहेतुसमुदायादौ न्याये च गतमिति वाक्यत्वमुपात्तम्। तच्च प्रतिज्ञा–परिभाषा–प्रवृत्ति निमित्तान्यतमानुपूर्वीमत्त्वम्। एतेन यदि प्रथमशाब्दज्ञानान्तेन न्यायजन्यो महावाक्यार्थबोधो ग्राह्यस्तज्जनक–मवान्तरवाक्यार्थज्ञानमुद्रया पर्वतादौ वह्निमद् भेदाद्यवगाहि शाब्दज्ञानं, तज्जनकवाक्यत्वमित्यवयवलक्षणमभिप्रेतम्, तदा प्रतिज्ञाद्यवयवैः प्रत्येकं जनितानां

वाक्यार्थबोधानां चिरविनिवृत्तत्वात्पुनरपि न्यायघटकपदानामनुसन्धानम्, तत: खले कपोतन्यायेन महावाक्यार्थबोधस्तेनाहत्यैव परामर्शो जन्यत इत्यसम्भव:।

अथ खले—कपोतन्यायेन बोधादन्तरितो विशिष्टवैशिष्ट्यावगाही शाब्दबोधो जन्यते स एव परामर्शे हेतुरत एव तेन विशिष्टवैशिष्ट्यावगाहि मानान्तरमुत्थाप्यत इति स्वरसत: संगच्छते। तथा च तथाविधपरार्थ—परामर्शजनकज्ञाने वर्तते या विशिष्टवैशिष्ट्य—विषयता तद्विशिष्टशाब्दबुद्धित्वावच्छिन्ने यादृशशाब्दबुद्धित्वेन जनकत्वं तदवच्छिन्नकारणीभूतज्ञानविषयीभूतानुपूर्वीमत्त्वमवयवलक्षणमिति चेत्—न, नीलपर्वत: कस्तूरीप्रभव—वह्निमान् नीलधूमादित्यादौ प्रतिज्ञा—हेत्वैकदेशेऽतिव्याप्ते:, प्रतिज्ञोदाहरणयोरर्थस्यान्यत्रानन्वयात्तयोरव्याप्ते:। महावाक्यार्थबोधानुप्रविष्टा ये वाक्यास्तेषां प्रत्येक—बोधकत्वन्तु हेतूपनययो: प्रतिज्ञानिगमनयोरव्याप्तमतिव्याप्तञ्च त्रिषूदाहरणावयवेषु, नहि यो यो धूमवान् स वह्निमान् इत्यनयोर्वाक्ययोरेको विशिष्टो वाक्यार्थ: यत्तच्छब्दघटित—वाक्याभ्यामेकविशेष्यताकबोधाजननाद् अन्यथा यं पश्येस्तस्य पादौ प्रणम, यं पक्त्वा तमोदनं भुङ्क्ते इत्यादिवाक्यानामपि योग्यता—प्रसंगादित्यादिसमाहितम्। यादृश्यानुपूर्वीवाक्यत्वावच्छेदेन प्रतिज्ञा—दिव्यवहारस्तादृशी न्यायानुपूर्वी तद्वत्त्वे तात्पर्यात्। मतङ्गजो नील इत्यादौ गजो नील इत्यानुपूर्वीवारणाय प्रतिज्ञादिव्यवहारगोचरानुपूर्व्यघटकत्वमपि विशेषणं वक्ष्यते।

**चिन्तामणि:—**

**अत एव वह्निव्याप्य धूमवानयमिति वाक्ये तदवयवे च न न्यायतदवयवलक्षणातिव्याप्ति:। तेन परामर्शस्य तदवयवेन च परामर्श—जनकस्य जननात्। यत्तु संक्षेपत: परामर्शप्रयोजकवाक्यत्वेन विशेषाभावात् सोऽपि न्याय एवेति, तन्न, कथायामाकाङ्क्षादिक्रमेणे— वाभिधानमिति प्रथमं विशिष्टवैशिष्ट्ये आकाङ्क्षा नास्तीति तदभिधाने निग्रहादिति वक्ष्यते। अन्यथा चक्षुरादेरपि परामर्शजनकतया न्यायत्वापत्ति: आकाङ्क्षाविरहस्तुल्य एव। अन्ये तु पञ्चावयववाक्याद्विजातीयमेव शाब्दज्ञानमुत्पद्यत इति तद्धीजनक—वाक्यत्वमेव न्यायत्वम्। एवं प्रतिज्ञाद्यवयवादपि प्रत्येकं विजातीयं शाब्दज्ञानमिति तत्तद्धीजनकशब्दत्वमेव तत्तल्लक्षणमिति। तत्र ज्ञानविशेषजनकत्वं, तत्तज्ज्ञानविशेषजनकत्वञ्च**

न्याये प्रतिज्ञादौ चानतिप्रसक्तमनुगतरूपमन्तरेण दुर्निरूपमिति। तत्स्वीकारे तस्यैव लक्षणत्वादन्यथा जातिसङ्करप्रसङ्गः।

।। इति तत्त्वचिन्तामणौ अवयवलक्षणम् ।।

**दीधिति:**

प्रतिज्ञादिप्रतिपाद्य–तत्तद्विशिष्टार्थविषयकज्ञानपञ्चकान्यतम–ज्ञानजनकवाक्यत्वमिति केचित्। तस्यैवेति, तथा च तादृशजातौ साधकाभाव इति भावः। बाधकमप्याह– अन्यथेति – न्यायजन्यज्ञाने पञ्चावयवजन्यत्वात् पञ्च, द्वित्रादिजन्ये द्वित्राद्या, एकैकजन्ये चैकैका जातय इति जातिसङ्कर इत्यर्थः। तत्र तत्र भिन्न–भिन्न–जातिकल्पने च सुतरां मानाभाव इति भावः। केचित्तु यदि चानुगतकारणमन्तरेणापि तादृशजातिमत्त्व–सम्भवस्तदा कदाचित्प्रतिज्ञाजन्येऽपि हेत्वादिजन्यवृत्तिर्हेत्वादिजन्ये प्रतिज्ञादिजन्य–वृत्तिर्जातिः स्यादिति सङ्कर एवेत्यर्थः। एवं सर्वेषां सर्वजातीयत्वमेकजातीयत्वं वा स्यादित्यपि द्रष्टव्यमित्याहुः।

**दीधितिविद्योत:**

नन्वनुमितिजनकवाक्यार्थज्ञानजनक– वाक्यं न्यायस्तद्घटकं वाक्यमवयव इत्येवं निरुच्यताम्, अस्तु च न्यायेन साक्षाज्जनित एव परामर्शः परार्थानुमितिहेतुरत आह–**अत एवेति**। तदवयवेन वह्निव्याप्येत्यादिना जननादिति, जननमुत्पादनं तस्य यथासंख्यमन्वय इति बोध्यम्। अथ स्वार्थत्वं परार्थत्वञ्च नानुमितित्वव्याप्ये जाती, किन्तु शब्दप्रयोज्यानुमितिः परार्था, तदितरा स्वार्था इति न्यायोऽप्यनुमितिप्रयोजकं वाक्यं, तच्च समयबन्धवशात्तेषां तेषां दार्शनिकानां द्व्यवयवं त्र्यवयवं पञ्चावयं दशावयवमित्यादिक्रमेण व्यवस्थितमाप्तोक्तन्तु वह्निव्याप्यधूमवान् पर्वत इति वाक्यं सर्वतन्त्राविरुद्धो न्याय इत्यभिसन्दधानस्य कस्यचिन्मतमाह–यत्त्वित्यादि। संक्षेपतः अनुमितेर्विशेषस्याप्रवेशात् परामर्शोऽनुमितिजनकं ज्ञानम्। ननु परामर्शप्रयोजकवाक्यत्वं कथाकथकन्यायमात्रे प्रयुज्यमानस्य न्यायपदस्य प्रवृत्तिनिमित्तमुत स्वपरिभाषितस्य? आद्ये कथायामिति, आकांक्षासमयबाधः। तथा च–यादृशानुपूर्वीकवाक्यत्वावच्छेदेन समयश्शास्त्रे निबद्धस्तद्विशिष्ट एव वाक्ये न्यायपदप्रयोगाद् वह्निव्याप्यधूमवान् पर्वत इति वाक्ये च समयबन्धाभावान्न तादृशं वाक्यं शास्त्रीयन्यायव्यवहारविषय

इति भाव:। द्वितीये त्वाह—अन्यथेति, समयबन्धमुल्लंघ्य परिभाषणे त्वित्यर्थ:। तथा च लाघवाद्वाक्यत्वमपि परामर्शजनकमात्रे न्यायपदं परिभाष्यतामिति भाव:। अथ न्यायजन्यशाब्दबोधादौ वैजात्यस्वीकार: परामर्शवैजात्योपपादकतया न्यायावयव— लक्षणान्यथानुपपत्त्या वा सिद्ध्यति, आद्ये—परार्थानुमितित्वजाति—रनुभवात्सामग्रीवैचित्र्याद् वा सिद्धा, न पक्षलिंगसाध्यभेदाद् भिद्यते, जलपृथिव्यौ रसवत्यौ गुरुत्वादित्यादिन्यायप्रयोज्यानुमितौ जलपक्षकपृथिवीपक्षकानुमितित्वयो: सङ्करप्रसंगात्, चित्रानुमितिस्वीकारे जात्यादिबाहुल्यस्यानुमितिद्वयस्वीकारे ज्ञानद्वययौगपद्यस्य चापत्ते:। किन्तु सकलपरार्थानुमितिसाधारण्येकैव। तथा च पर्वतपक्षक— वह्निसाध्यक—धूमलिङ्गक विजातीयानुमितौ तथाविध एव परामर्शो निश्चयत्वस्य न्यायत्वस्य चाप्रवेशाल्लाघवाज्ज्ञानत्वस्थाने वैजात्यविशेषं प्रवेश्य कारणमभ्युपेयते। तादृशपरामर्शे च न्यायजन्यो महावाक्यार्थबोधो न वैजात्यमात्रेण जनको घटसाध्यकन्यायवाक्यार्थबोधाद्वह्निसाध्यकपरार्थपरामर्शप्रसंगात्। किन्तु वह्निमदभिन्नपर्वतादिस्वरूप—वाक्यार्थपञ्चकावगाहिविजातीयत्वेन जनकस्तथा च शाब्दत्वमेव कुतो न प्रवेशनीयमलं वैजात्येन शाब्दत्वप्रवेशेनापि निश्चयत्वाप्रवेशाल्लाघावसम्भवात्। ननु तथापि पर्वतेऽग्निर्धूमायत इत्यादि न्यायभिन्नवाक्य—जन्यतावद्वाक्यार्थबोधेन परार्थपरामर्शजननाभावान्न्याय—नियतानुपूर्वीविशेषज्ञानप्रयोज्यत्वमपि तावद्वाक्यार्थबोधे प्रवेशनीयम्, अतस्तद—प्रवेशलाघवाद्वैजात्यप्रवेश एवात्रावश्यक:, विजातीयशाब्दबोधे च न्यायनियता—नुपूर्वीज्ञानस्य पृथक्कारणत्वमभ्युपेयम्, परामर्शं प्रति कारणतायां गुरुधर्मस्यावच्छेदकत्वे तद्घटकानां विशेष्यविशेषणभावव्यत्यासेन गुरुतरकारण—ताधिक्य—प्रसंगादिति चेत् न, यत्र घटसाध्यकन्यायस्य वह्निसाध्यकन्यायाभासस्य च समूहालम्बनं स्मरणम्, अथ न्यायतदाभासयोर्महा— वाक्यार्थस्य विजातीय: शाब्दबोध: तत्र घटस्येव वह्नेरपि परार्थपरामर्शप्रसंगेन न्यायनियतानुपूर्वी—विशेषज्ञानजन्यत्वप्रवेशस्याप्युभयथाप्यावश्यकत्वात्, वह्निसाध्यकन्यायार्थगोचरो विजातीय: शाब्दबोधो वह्निसाध्यक— न्यायनियतानुपूर्वीज्ञानजन्यतया तदभावे कथमुत्पद्यतामिति चेत्, मास्तु विजातीय: शाब्द:, मानसं तु स्यादेव सामग्रीसत्त्वात्। विजातीयशाब्दबोधसामग्र्यास्तदितरत्र प्रतिबन्धकतायां महागौरवात्। यदि चानया रीत्या परामर्शवैजात्यमेव न सिद्ध्यति, मा सैत्सीत् यादृशानुपूर्वीज्ञानाव्य

वहितोत्तरोत्पत्तिक–न्यायार्थशाब्दबोधजनित– परामर्शत्वेन परार्थानुमिति–जनकत्वं तादृशानुपूर्वीमद्वाक्यं न्यायलक्षणं निर्वाच्यमिति दिक्।

यदपि वह्निसाध्यकपरार्थपरामर्शे न्यायार्थविषयक:– विजातीयशाब्दबोधस्य कारणतायामेकस्यामेव पञ्चानां वाक्यार्थविषयत्वानां प्रवेशे पञ्चसु विशेष्यविशेषणभावव्यत्यासे विंशत्यधिकशतं गुरव: कार्यकारणभावा: स्युरतो वह्निमत्पर्वताद्येकैकवाक्यार्थ–विषयक–विजातीयशाब्दबोधा: कार्यसहभावेन कारणमेषामैक्यं पुनरर्थसिद्धम्, न्यायनियतानुपूर्वीज्ञानमपि पूर्ववर्त्तितया परामर्शं प्रत्येव कारणम्, यत्र च न्यायार्थबोध एव न्यायान्तरवशात् न्यायनियता–नुपूर्वीविषयकस्तत्रापि परार्थपरामर्श इष्यत एवेति मतं, तत्रापि किं वैजात्येन, तत्स्थाने शाब्दत्वप्रवेशेनैवाभिमतनिर्वाहात्, यादृशानुपूर्वीज्ञाने परार्थपरामर्शं प्रति जनकत्वं तद्वद्वाक्यं न्याय इति लक्षणस्यापि सुवचत्वाच्च। अन्त्ये त्वाह तन्न **ज्ञानविशेषेत्यादि**, एवमुपपद्यमानमपि मूलं परार्थानुमितित्वव्याप्या जातिरिति तावदप्रमाणकम्, सा ह्यनुभवाद्, व्यवहाराद्वा, कारणवैचित्र्याद्वा सिद्धयेत्? नाद्य: अनुभवासिद्धे:, न द्वितीय:, परार्थानुमितिरिति व्यवहारस्य न्यायप्रयोज्या–नुमितित्वालम्बनात्, न तृतीय:, सत्यामप्रामाण्यशङ्कायां परार्थानुमितेरप्यनभ्युपगमात्। अभ्युमगमे वा न्यायजन्यवाक्यार्थ– ज्ञानविरहविशिष्टस्याप्रामाण्य–ज्ञानस्यानुमितिसामान्यं प्रत्येव प्रतिबन्धकत्वाभ्युपगमेन न्यायजन्यवाक्यार्थबोधा–नन्तरितादप्रामाण्यावगाहिनोऽपि परामर्शादनुमित्युत्पादसम्भवात्। अनुमितिपरामर्शयो–वैजात्यद्वयस्य कार्यकारणभावान्तरस्य विजातीयपरामर्शे न्यायजन्यशाब्द–बोधविशेषस्य जनकतायाश्च कल्पनमपेक्ष्य क्लृप्ताप्रामाण्यज्ञानप्रतिबन्धकतायां शाब्दबोध – विशेषस्योत्तेजकत्वस्वीकारस्यैव लघीयस्त्वात्, भवतु वा परार्थानुमितित्वं जाति–विशेषस्तथापि तद्विशिष्टे कारणान्तरकल्पनावश्यकत्वे न्यायजन्यो वाक्यार्थबोधस्ताद्रूप्येण वैजात्यविशेषेण वा कारणमस्तु, किमन्तरा मानसपरामर्शाङ्गीकारेण, स्याद्वोपनयस्थायं पदानुषङ्गेण जायमानायां निगमनार्थबुद्धावेव सा जातिस्तत्र व्याप्तिपक्षधर्मताप्रभवतया गौणो मननपदव्यपदेश:। मानसपरामर्शप्रयोज्यजातेरपि मननत्वव्याप्यत्वे प्रमाणाभावाद् गौण एव स:। अथ सिद्धसाधनस्थलीयन्यायात्परार्थमननस्योत्पत्त्या तत्राप्यनुमितित्वजातिसिद्धिरन्यथा तत्र पक्षताकारणान्तरकल्पनप्रसंगादिति चेन्न, स्वार्थानुमितिर्जायतामित्यनुमित्सासत्त्वे

सति चाप्रामाण्यज्ञानास्कन्दिते सिद्धिस्वरूपे न्यायप्रयोज्यमानस–परामर्शे परार्थानुमित्यापत्त्या परार्थानुमितौ स्वार्थानुमितित्वावच्छिन्नोद्देश्यताकानुमित्सा–विरहविशिष्टसिद्ध्यभावरूपाया: पक्षताया: कारणत्वान्तरकल्पनावश्यकत्वे लाघवानवकाशात्। अनुमितित्वप्रकारेच्छा तु स्वार्थानुमितिं प्रति सिद्धे: प्रतिबन्धकतायामेवोत्तेजिका, नतु परार्थानुमितिम्, उत्तेजकत्वेपि वा नानुमितित्वस्य परार्थमननवृत्तित्वं साधयति–**फलबलेन**।

तद्वृत्तिधर्मप्रकारकेच्छाया अपि तत्प्रतिबन्धकतायामुत्तेजकत्वे क्षतिविरहा–दित्यादि– दूषणैरनुपन्नमिव मत्वा यथाश्रुतमूलन्यायलक्षणस्य वक्ष्यमाणदोषदुष्टतया स्वयं न्यायलक्षणमाह **दीधितौ**– उचितेति। पर्वतो वह्निमान् इत्याद–यस्यतस्माद्वह्निमानित्यन्ता वर्णा न्यायपदेन पर्वतो वह्निमानितिवाक्यघटका: पकाररेफवकारादय: प्रतिज्ञापदेन धूमादित्यत्र धूकार–माकार–तकारा: हेतुपदेनेत्येवमन्येऽपि यथायथं प्रतिपाद्यन्ते। तत्र तस्माद्वह्निमानित्यत्र नकारे न्यायत्वमवयवत्वं निगमनत्वञ्च, पर्वतो वह्निमानित्यत्र पकारे र्वकारे च प्रतिज्ञात्वमवयवत्वं न्यायत्वं च न्यायादिपदप्रवृत्तिनिमित्तस्य पूर्वोत्तरत्व–मध्यमत्वस्वरूपानुपूर्वीविशेषस्य प्रत्येकवर्णेष्वेव विश्रान्ते:। तथा चैकत्रैव वर्णे न्यायपदं प्रतिज्ञादिपदं च प्रवर्त्तते, तत्र न्यायपदप्रवृत्तिनिमित्तानामानुपूर्वी–णामुपलक्षणविधया परिचयार्थोऽयमारम्भ:। अथवा तावद्वर्णवृत्तिरन्यतमत्वादिरनुगतो धर्मो न्यायादिपदप्रवृत्तिनिमित्तमत एव एकवाक्येऽपि न्यायपदं न नानार्थकम्, किन्तु भिन्नवाक्ये। तथा च तावदन्यतमानां परिचायकोऽयमुद्यम:। तथा च ..नकल्पे प्रतिज्ञादिपञ्चके समुदायात्मिका या उचितानुपूर्वी तद्वद्वाक्यं न्याय इत्यर्थ:। उचितत्वं कथाघटकवर्णवृत्तित्वम्, नायमाभास इति **कण्टकोद्धार**–वाक्यानुपूर्व्यपि कथाघटकवर्णवृत्तिरिति तद्व्युदासाय प्रतिज्ञादिपञ्चक–समुदायात्मकत्वमानुपूर्वीविशेषणम्, प्रतिज्ञादिपञ्चकान्यावृत्तिरिति तदर्थ:। प्रतिज्ञादिपञ्चकान्यावृत्ति: कथारम्भकवर्णवृत्तिर्यानुपूर्वी सा प्रतिज्ञात्वस्वरूपापि सम्भवतीति वाक्यत्वमुपात्तम्, यावन्त: प्रतिज्ञात्वादिविशिष्टा वर्णास्तद्वृत्तिजातयो वा तद्घटितत्वस्वरूपम् फलत आनुपूर्वीविशेषणम्, वाक्यपदेन प्रतिज्ञा–द्यानुपूर्वीपञ्चक– घटितत्वमभिधीयत इति तत्त्वम्। एवं सति न्यायकण्टकोद्धारोभय–घटितानुपूर्वीवारणाय प्रतिज्ञाद्यानुपूर्वीपञ्चकानधिकरण– वर्णाघटितपरं प्रतिज्ञादि–

पञ्चकसमुदायपदम्। उचितपदं तु पर्वतो वह्निमान् गुणात्, यो यः पृथिवीत्ववान् स स द्रव्यत्ववान्, रूपव्याप्यगन्धवानयम्, तस्मात्सत्तावानित्यादिविभिन्नपक्ष–साध्यहेतुकेन व्युत्क्रमेणोक्तेन वा प्रतिज्ञादिपञ्चकेन घटितायाः पर्वतो वह्निसामग्रीमान् तस्मादित्यादिसम्प्रदायविरुद्धाया विभिन्नपुरुषोच्चारित–क्रमिकवर्ण–समूहवृत्तेः सिद्धसाधनस्थलीयन्यायाभास– वृत्तेश्चानुपूर्व्या व्युदासाय असाधकता–साधकन्याये, न्यायपदं नानार्थकं तत्र समयबन्धवशादवयवचतुष्टय घटिताया–स्तत्पञ्चकघटितायाश्चानुपूर्व्या न्यायपदप्रवृत्तिनिमित्तत्वात्। नहीदं न्यायस्य लक्षणमिति भ्रमितव्यम्, भवतु वा न्यायस्वरूपवर्णानां लक्षणपरमिदं वचनं, तथापि असाधकतासाधकन्यायोऽपि पञ्चावयवक एव हेत्वाभासात्मकहेतो रसाधकताव्याप्यत्वस्योभयसिद्धत्वेऽपि वादिनां कथायां समयवशादुदाहरणमिदं प्रयोज्यमिति भट्टाचार्याणामभिप्रायः। एवञ्च प्रतिज्ञाद्यानुपूर्वीपञ्चकघटिता या प्रतिज्ञाद्यानुपूर्वीपञ्चकानधिकरणवर्णाघटिता कथाघटकवर्णवृत्तिरानुपूर्वी तद्वान् वर्णो न्याय इति निगर्वः। द्वितीयकल्पे तु उचितानुपूर्वीकाः कथाघटकाः प्रतिज्ञात्वादीनां पञ्चानां प्रत्येकमधिकरणं ये वर्णास्तेषां समुदायोऽन्यतमो वा न्याय इत्यर्थः। विभिन्नसाध्यहेतुकादिन्यायाभासवारणाय कथाघटका इति कण्टकोद्धारवारणाय–प्रतिज्ञादिपञ्चकेति। तावद्वर्णानामनुगमाय समुदाय इति। ननु वक्ष्यमाणन्याया वयवत्वगर्भप्रतिज्ञात्वादिप्रवेशो न्यायत्व– प्रतिज्ञात्वयोरन्योन्याश्रय इत्यत आह–प्रतिज्ञात्वादिकमिति, यादृशानुपूर्वीविशेषावच्छेदेन प्रामाणिकानां प्रतिज्ञा–दिव्यवहारस्तादृशानुपूर्वीपञ्चकघटितत्वादिकमेव प्रवेशनीयमिति भावः। ननु तथाप्ययं नाभास इति कण्टकोद्धारवाक्यमादाय न्यायघटितानुपूर्वीकथाघटकमात्रवृत्तिः प्रतिज्ञाद्यानुपूर्वीमात्रघटिता चेति तन्निमित्तकन्यायपद–प्रवृत्तिप्रसंगः, अयं नाभास इत्यानुपूर्व्या अपि प्रतिज्ञादिव्यवहारप्रयोजकत्वादत आह–साध्यादीति। तथा च यादृशानुपूर्वी– विशेषावच्छेदेन वह्निपर्वतधूमसाध्यपक्षहेतुकप्रतिज्ञादिव्य–वहारास्तादृशानुपूर्व्य– नधिकरणवर्णाघटितत्वं प्रवेशनीयम्। अयं नाभास इत्यानुपूर्वी– विशेषावच्छेदेनाभासत्वाभावसाध्यक–प्रतिज्ञादिव्यवहारसत्त्वेऽपि वह्न्यादिसाध्यक– प्रतिज्ञाव्यवहाराभावात्तद्घटितानुपूर्वी न न्यायपदप्रवृत्तिनिमित्तमिति भावः।

नन्वेवम् हेतु–पक्ष–साध्यभेदेन न्यायपदप्रवृत्तिनिमित्तभेदान्न्यायपदं नानार्थकं

स्यादित्याशङ्क्य तदिष्टमेवेत्याह—व्याप्त्यादेरिति व्याप्तिपदादे: न्यायादे:—न्यायपदादे: अननुगम: अननुगतप्रवृत्तिनिमित्तकत्वम्, उपलक्षणमिदं एकसाध्य—हेतुपक्षभेदेन न्यायेऽयानुपूर्वीविभेदात्। न्यायपदवृत्तिर्भिद्यत एव, न्यायपदेन हि—गिरिरग्निमानित्यादि, पर्वतो वह्निमानित्यादि, शैलो हुताशनवानित्यादिवाक्यानि तत्तदानुपूर्वीविशेषविशिष्टानि प्रत्याय्यन्ते, न तु सकलानुपूर्वीसाधारण: कोऽप्यनुग—तोऽन तिप्रसक्तो धर्मो विद्यते, विद्यमानोऽपि वा न न्यायपदजन्यप्रतीतिपथमवतरतीति **पदवाक्यरत्नाकरे** प्रपञ्चितमस्माभि:।

**गौड़ास्तु**—उचितानुपूर्वीकेति— औचित्यं व्युत्क्रमोक्तप्रतिज्ञादिपञ्चकावृत्तित्वम्, आनुपूर्वी वर्णानां वाक्यानां पौर्वापर्यम्, व्युत्क्रमोक्तप्रतिज्ञादिपञ्चकभिन्नेति निर्गलितार्थ:। तावन्मात्रं घटमानयेति वाक्येऽपि गतमत: प्रतिज्ञादीति, न्यायावयववारणाय—**पञ्चकेति**, समुदाय—पदन्तु तादृशपञ्चकत्वपर्याप्त्यधि—करणताया, न्यायपदप्रवृत्तिनिमित्तत्वस्य तदितरभेदसाधनत्वस्य वा लाभाय। तथा च— व्युत्क्रमोक्तप्रतिज्ञादिपञ्चकभिन्नं यत्प्रतिज्ञादितत्पर्याप्तपञ्चकत्वं न्यायत्वमिति समुदायार्थ:। **शून्यमिति**— यादृश—यादृशानुपूर्वीविशेषावच्छेदेन प्रतिज्ञादिव्य—वहारस्तावन्मात्रमित्यर्थ:। नान्योऽन्याश्रय इत्युपलक्षणम् न्यायानन्तर्गतत्व—गर्भप्रतिज्ञात्वादे: प्रवेशे व्युत्क्रमोक्ताप्रतिज्ञादे: न्यायान्तर्गतत्वविरहात् तत्समुदायातिव्याप्तिविरहादु— चितानुपूर्वीकपदं व्यर्थमपि भवतीति ध्येयम्। विभिन्नपक्षसाध्यकप्रतिज्ञा— दिसमुदायेऽतिव्याप्तेराह— **साध्यादीति**। तथा च यादृश—यादृशानुपूर्वीविशेषावच्छेदेन प्रामाणिकानां तत्पक्षसाध्यहेतुक—प्रतिज्ञादिव्यवहारस्तादृशान्यतमानुपूर्वीकत्वमत्र प्रतिज्ञात्वादिकं निर्वाच्यं पूर्वत: प्रभावान् वह्ने:, यो यो दहनवान् स द्युतिमान्; रुचिव्याप्यहुताशनवान् गिरिस्तस्माच्छविमान् इति भिन्नपर्यायोक्तप्रतिज्ञादिसमुदायो न्यायत्वेनेष्ट एवेति भाव:।

नन्वेवमुचितानुपूर्वीकवह्निसाध्यक—पर्वतपक्षक—धूमहेतुक—प्रतिज्ञादिपञ्च—समुदायत्वस्य न्यायलक्षणत्वे साध्यपक्षहेत्वन्तरकन्यायेष्वव्याप्तिरित्यत आह **साध्यादेरिति**। तथा च यादृशसमुदायत्वावच्छेदेन पर्वतपक्षकवाह्निसाध्यक—धूमलिङ्गकानुमितितात्पर्येण प्रयुज्यमानत्वम्, प्रामाणिकानां तादृशन्यायव्यवहारविषयत्वं वा तादृशसमुदायत्वमेव न्यायलक्षणतावच्छेदकमिति लक्षणाननुगमो न दोष इति व्याचक्षते, तच्चिन्त्यम्। नन्वनुमितिचरमकारणस्य लिङ्गपरामर्शस्य प्रयोजनकत्वं

वाक्यार्थविशेषविषयकत्वोपलक्षकमत एव प्रतिज्ञादिपञ्चक–वाक्यैरेकवाक्यतया स्वार्थविशिष्टज्ञानं जन्यत इत्यनेन तदुपपादितम्। तादृशवाक्यार्थबोधजनक–वाक्यत्वं यथाश्रुतमूलार्थ: कथं परित्यक्त इति चेत्, स वाक्यार्थबोध: किमेकमुख्यविशेष्यताको, नानामुख्यविशेष्यताको वा? आद्ये प्रतिज्ञानिगमनयोरिति निगमनपदमुपनय–स्याप्युपलक्षकम्, तथा च वह्निमत्पर्वत: प्रतिज्ञार्थ:, उपनयार्थो विशिष्ट–धूमवत्पर्वतस्तयोर्न भेदेनान्वय:, प्रातिपदिकार्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वात्। नाप्यभेदेन, निरवच्छिन्न–पर्वतत्वप्रकारतानिरूपितविशेष्यता– प्रतियोगिन्या–स्तादात्म्यसंसर्गावच्छिन्नाया: प्रकारताया: निरवच्छिन्नतादात्म्येन प्रतिबन्धकत्वादन्यथा पर्वत: पर्वत इति वाक्यादपि शाब्दबुद्धिप्रसंगात्। अथ प्रतिज्ञोपनयाभ्यां पर्वतो वह्निमान्, वह्निव्याप्यधूमवानिति पर्वतत्वमेकदैवोल्लिखन्ननुभवो जन्यतामेक–त्ववाचकयो: सुबाख्यातयो: सम्भेदेऽप्येकत्वावगाहितावत् पर्वतवाचकाभ्यामिदं – पर्वतपदाभ्यां पर्वतस्यापि तथैवावगाहनसम्भवात्, भवतु वा पर्वतत्व–निष्ठाप्रकारतावच्छेदकतासामानाधिकरण्येन धूवावच्छिन्ना न तु निरवच्छिन्ना, तद्धर्मविशिष्टे विशेषणवत्ता निश्चयस्य सामानाधिकरण्यसम्बन्धेन तद्धर्मावच्छिन्नतद्धर्मनिष्ठावच्छेदकताक– विशिष्टवैशिष्ट्यबुद्धिजननस्वाभाव्यात् संसर्गभेदेन विशिष्टवैशिष्ट्यबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानकारणताभेदात्। भवतु वा पर्वतत्वावच्छिन्नविशेष्यता–निरूपित– तादात्म्यसंसर्गावच्छिन्न–प्रकारतानिरूपकं यदवच्छेदकतावदन्यदवच्छेदकत्वं तदेव पर्वत्त्वभेदजन्यतावच्छेदक: संसर्ग:। अवच्छेदकतावत्त्वं च स्वनिरूपकत्व–स्वनिरूपकप्रकारतानि–रूपकत्वान्यतरसंसर्गेण, स्वञ्च न स्वविशिष्टम्। तथा च प्रतिज्ञार्थविशेष्य–कोपनयार्थप्रकारकवाक्यार्थबोधाभ्युपगमेऽपि पर्वतत्वनिष्ठप्रकार– तावच्छेदकता स्वनिरूपकप्रकारतानिरूपकत्वसंसर्गेण धूमनिष्ठावच्छेदकतावती भवतीति पर्वतत्वेन न प्रतिबद्ध्यते, एवं हेतुसहकृतप्रतिज्ञया धूमज्ञानज्ञाप्य–वह्निमान् पर्वत उपस्थापितस्तयोस्तादात्म्येनान्वयोऽपि सम्भवतीति दण्डवान् रक्तदण्डवानिति स्वयमेवाभ्युपेष्यमाणत्वादत आह–उदाहरणावयवान्तरयोश्चेति। इदमुपलक्षणम् उदाहरणघटकवाक्यत्रयस्यापि परस्परमन्वयो द्रष्टव्य:।

यद्यपि धूमवत् यत्पदार्थयो: धूमव्यापकवह्निमन्महानससदृशं धूमवत्, तच्च तादात्म्येन प्रतिज्ञार्थेऽन्वेतुमर्हत्येव, चैत्रो जानाति, पाककृते: यो य: पचति स

जानाति यथा मैत्र: ज्ञानाश्रयत्वव्याप्य–पाककृतिमानयं तस्माज्जानाति इति न्यायादाख्यातार्थविशिष्टमुद्दिश्येतरपदार्थस्यान्वसम्भवेऽपि युगपदुपस्थितानां सर्वपदार्थानां 'खले कपोत' न्यायात्पाककृतिज्ञाप्य– ज्ञानाश्रयत्ववान् पाककृतिमदभिन्नो मैत्रसदृशेन पाककृतिव्यापकज्ञानाश्रयत्ववता पाककृतिमिता चाभिन्नो ज्ञानाश्रयत्वव्याप्यपाक–कृतिमता व्याप्तिपक्षधर्मताविशिष्ट– पाककृतिज्ञाप्य ज्ञानाश्रयताकेन चैत्रेणाभिन्नश्चैत्र इत्यन्वयबोध:। यथा मैत्र इत्यादौ यथाशब्दार्थे उपमानस्य विशेषणत्वेनैव अन्वयस्य व्युत्पन्नत्वादिवशब्दार्थवत्, तदुक्तं काव्यप्रकाशे–यथेव–वा–शब्दा: यत्परास्तस्यैवोपमानताप्रतीतिरिति। तथापि 'यथा महानसमिति' वाक्यं यथापदपरामृष्टधूमवद्व्यापकवह्निमत्तया महानसं बोधयति, न तु यथा पदार्थ विशेषणतया तद्वाक्यार्थस्य धूमादिवन्महानसस्य भेदेनाभेदेन वा नान्यत्रान्वयो भवितुमर्हतीति नैकमुख्यविशेष्यताकबोधजनको न्याय:। अन्यथा यथा महानसं तथा पर्वत इत्यादौ महानसवृत्तिधर्मवान् पर्वत इति यथापदेनैव बोधिते तथा–पदानर्थक्यप्रसंगात्। सिद्धान्ते तु यथाशब्दोपात्तो धूमदिरेव तथाशब्देन परामृश्यत इति धूमवन्महानसं धूमवान् पर्वत इत्यन्वबोध: सूपपन्न:। यत्तदोरेकधर्मावली–ढपरामर्शकत्वस्य वाक्यद्वयानुप्रवेशेन नित्याभिसम्बन्धस्य च व्युत्पत्तिसिद्धत्वात्। यथाशब्दस्य यच्छब्दविकारत्वादुदाहरणवाक्ये तु न तथाशब्दानुप्रवेश:, यच्छब्दस्योत्तरवाक्यगतत्वे पूर्ववाक्ये तच्छब्दानुपादानस्य प्रकाशकारादिभिर्व्य–वस्थापितत्वात्। न चैवं यथेव वा शब्दा यत्परास्तस्यैवोपमानताप्रतीतिरिति प्रकाशविरोध:, तत्रोपमानत्वं हि न साधारणधर्मे विशेषणत्वस्वरूपम्, तत्तुल्यमस्येत्यादौ साधर्म्यविशेष्येऽप्युपमानत्वावगमात्, किन्तु–प्रकृष्टगुणत्वादि, तच्च, व्यञ्जना–सहकृतयाभिधया इवादिशब्दै: प्रतिपाद्यत इत्यालङ्कारिकाणां दर्शन एव शोभते।

यदि च यथा महानसं तथा पर्वत इत्यादावपि यथाशब्दोपात्ते धूमादौ महानसं विशेषणमेव, तथा च यो धर्मो महानसवृत्ति: स धर्म: पर्वतवृत्तिरित्यन्वयबोध:, यत्र चेतरवाक्यगतो यथाशब्द: स उपमानविशेष्यगतं स्वार्थपूर्ववाक्यार्थविशेषणतयैव भासयतीवशब्दवत्। अतएव बाहुना प्रहरति वज्रेण यथा, वज्रेणेवेत्यादौ तुल्यमेवोपमानोपमेयपदयो: समानविभक्तिकत्वं श्रूयत इति मतमाश्रीयते। यदि वा यथाशब्दार्थोपमानयोर्विशेषणविशेष्यभावे कामचार इत्यभ्युपेयते, तथापि ह्रदो

निर्धूमो निर्वह्नित्वात्। यो यो धूमवान् स स वह्निमान् यथा पर्वत इत्यत्र व्यतिरेक्युदाहरणस्य न प्रतिज्ञावाक्यैकवाक्यत्वम्। किञ्च–यत्तदोरेकधर्मावच्छिन्नपरामर्शिनोरेकमुख्यविशेष्यताकवाक्यार्थबुद्धिम्प्रति असमर्थत्वाद्योयो धूमवान् स वह्निमान् इत्यनयोरेकवाक्यत्वासम्भवः, अन्यथा यं पक्त्वा तं भुङ्क्ष्वेत्यादेरप्यन्वयबुद्धिप्रसंगात्। येन पोषितस्तमभिद्रुह्यतीत्यादौ चैत्र इत्यनुषक्तस्य द्वयोर्वाक्ययोरनुप्रवेशादाकांक्षासमर्थनमित्याशयः। एकविशेषनिषेधस्य विशेषान्तरेऽनुज्ञाफलकत्वात्। परन्त्विति–कथञ्चिदुपनयस्थायं– पदस्य निगमनेऽनुषङ्गाभावे विशिष्टैकार्थप्रतिपत्तिरनुमितिस्तत्परता तत्प्रयोजनकत्वेन तात्पर्यम्।

ननु मा भूदेकमुख्यविशेष्यताको बोधः, मुख्यविशेष्यतापञ्चकविशिष्टवाक्यार्थ–बोधस्यानुमितिजनक–परार्थपरामर्शप्रयोजकत्वेनानुगमात् तज्जनकवाक्यत्वं न्यायलक्षणं सम्भवतीति द्वितीयकल्पः स्यादित्यत आह–तादृशेत्यादि–परामर्शं प्रति प्रयोजकत्वं परामर्शविषयेतराविषयकज्ञानत्वेन, तद्विषयकत्वमात्रेण, वा विवक्षितम्? आद्ये–यदीति–तत्तत्पदार्थसार्थे व्याप्तिपक्षधर्मते तदुपस्थापकतया, उदाहरणन्तु व्याप्त्यविनाभूतम्, उदाहरणोपनययोस्तन्मात्र–जनितो वाक्यार्थबोधः प्रयोजको, न्यायजनितो वाक्यार्थबोधो न तथेत्यसम्भवः। द्वितीये यत्वाह–अथेत्यादि। तदानुकूल्यम् तद्विषयविषयकत्वं तथात्वम्, परामर्शविषयकवाक्यार्थबोधप्रयोजकत्वम्, तथा चात्रैव वाक्येऽतिव्याप्तिरिति भावः। समाहितम् अनुमितिचरमेत्यादिमूलस्योचितानुपूर्वीक–प्रतिज्ञादिपञ्चक समुदाये तात्पर्योपवर्णनेन।

स्वयमवयवलक्षणमाह–अवयवत्वन्त्वित्यादि। तत्पक्षकतत्साध्यकतल्लिंगक–न्यायावयवस्य लक्षणं तादृशन्यायसामान्यं यद्विषयकप्रतीतिविषयस्तद्भिन्नं यत्प्रतिज्ञादिव्यवहारनिमित्तम् समुदायत्वं पर्याप्त्या तत्पञ्चकान्यतमत्वम्। पर्वतो वह्निमान् इत्युदासीनवाक्यवारणाय सत्यन्तम्, गिरिरग्निमानित्यादिन्यायस्य पर्वतो वह्निमानिति समुदायत्वाविषयकप्रतीतिविषयत्वेऽपि न पर्वतपक्षक–वह्निसाध्यक–धूमलिंगकन्याय–सामान्यं, तथा। समस्तन्यायपर्याप्त–समुदायत्वादेर्वारणाय प्रतिज्ञादीति। पञ्चकवत्त्वं न कुत्रापीत्यन्यतमेति। ननु मतङ्गजो नील इत्यादि न्यायान्तर्गतस्य गजो नील इतिभागस्य न्यायान्तर्गतप्रतिज्ञाव्यवहारनिमित्त–समुदायत्ववत्त्वात्तत्रातिव्याप्तिरतो लक्षणान्तरमाह–प्रतिज्ञाद्येति, न्यायान्तर्गतत्वे सतीत्यत्राप्यनुषञ्जनीयम्। अत्र

तत्तन्न्यायानुपूर्वीभेदादवयवलक्षणं भिद्यते। तथा च न्यायपर्याप्त–तदानुपूर्वीघटकत्वे सतीत्यर्थ:। प्रतिज्ञाद्यघटकत्वमपि तन्न्यायानुपूर्व्यन्तर्गत– प्रतिज्ञाद्यघटकत्वमेव। घटकत्वन्तु तद्भिन्नत्वे सति तद्विषयताव्यापकविषयकत्वम् तेन प्रतिज्ञात्वादेर्न प्रतिज्ञात्वघटकत्वं, प्रतिज्ञादिहेत्वन्तभागेऽतिव्याप्तेराह–**उभयेति**। घटकत्वं न भेदगर्भम्। उभयपदार्थं विशिष्य निर्वक्ति **उभयञ्चेत्यादि**।

**अत्रेदमवधेयम्**– प्रतिज्ञादिपञ्चकसमुदायत्वं यदि न्यायत्वं, तदा द्व्यवयवकं वाक्यं न्याय इति बौद्धै: सह विवाद: कथं पदमादध्यात्? नहि द्व्यवयवकं वाक्यं पञ्चावयवसमुदाय इति बौद्धा व्यपदिशन्ति, व्याहतत्वादग्रे च प्रतिज्ञान–साधनाङ्गमित्यादिका शङ्का कथमवतरेत् साधनानङ्गत्वेन न्यायावयवत्वस्यैव तत्र निषेधात्। नच प्रतिज्ञा न प्रतिज्ञाद्यन्यतमेत्याशङ्कितुं शक्यते, नापि न न्यायान्तर्गतेति व्याघातात्, तथाच यत् सत्तत्क्षणिकं–संश्च विवादाध्यासित: शब्दादिरित्यु–दाहरणोपनयमात्रात्मकं वाक्यं न्यायो न वेति विप्रतिपत्ति– विषयन्यायस्वरूप–निर्वचन–प्रस्तावे किमनेन नैयायिकमात्राभिहितन्यायधर्मिनिर्वचनेन, ततो यादृशानुपूर्वीक–वाक्यप्रयोज्य–वाक्यार्थबुद्धित्वेन परार्थपरामर्शप्रयोजकत्वं तादृशानुपूर्वीकवाक्यत्वं सर्वदर्शन–साधारणं न्यायलक्षणमवश्यं निर्वाच्यम्, यस्य द्व्यवयवकवाक्यत्वावच्छेदेन विवादप्रतिज्ञा न साधनाङ्गमित्यादिका शङ्का तु तादृशानुपूर्वीघटकत्वस्वरूपमवयव–तदवयवसाधारणं न्यायान्तर्गतत्वमात्रमालम्बते मौलमवयवलक्षणं नैयायिकपरिभाषितावयव– मात्रमालम्बते। अतएव पञ्चधा तद्विभागोऽपि प्रतिज्ञावाक्ये संगच्छते। यदपि पञ्चभिरवयवैरेकवाक्यतया बोधो न संभवतीत्युपपादितं तदपि चिन्त्यम्, द्विविधा ह्येकवाक्यता पदैकवाक्यता, वाक्यैकवाक्यता च। तत्र पदैकवाक्यत्वं प्रतिज्ञाहेत्वोरुपनय–निगमनयोरेव न तूदाहरणेन कस्यापि तथाविधवाक्यैरेकवाक्यत्वं पञ्चानामवयवानां सम्भवत्येव। अत एव प्रतिज्ञादिपञ्चवाक्यैरेकवाक्यतया स्वार्थविशिष्टज्ञानं जन्यत इति मूले वाक्यैकवाक्यतैवोक्ता, न तु पदैक–वाक्यता, वाक्ययोरेकवाक्यतायाञ्च न पदयोरिव तुल्यविभक्तिकत्वं षष्ठ्यन्तत्वादि तन्त्रम्, किन्तु सङ्गतिमात्रमत एव मूले प्रत्यवयवमेकवाक्यतायै सङ्गतय: प्रदर्शिता:। अतएव दर्शपौर्णमासाभ्यां यजेतेति प्रधानविधिना यागेन स्वर्गं भावयेदित्यवगतायाम्भावनायां कथमित्याकाङ्क्षया उपपादकत्वसंगत्या प्रवृत्त इडो यजतीत्यादिविधाववगतस्य प्रयाजस्योपपाद्योप–

पादकभावेनान्वयः, यया सङ्गत्या ययोर्वाक्ययोः पौर्वापर्येण प्रवृत्तिस्तदर्थयोस्तेनैव संसर्गेणान्वयोपगमात्। अत एव मलिनं ते वपुरिति सिद्धार्थे निर्दिष्टे किन्तु त इति साध्यत्वसंगत्या अभिहिते सरसि स्नाया इति वाक्ये साध्यतयैव वपुर्मालिन्यस्यान्वयः। अत एव त्वं पश्येत्युक्ते मृगो धावतीति वाक्ये विषयितया मृगकर्तृकधावनस्य दर्शनेऽन्वयः। अतएव पश्य मृगो धावतीत्यादावेकवाक्यताव्यवहारः शब्दविद्यावतामत एव च तिङ्ङतिङ इतिसूत्रेणातिङन्तात्परं तिङन्तं निहन्यत इत्यर्थकेनातिङ इति तिङन्तशब्दः पर्युदस्तः। अग्निमीळे पुरोहितम् इत्यत्रेळे शब्दे सुबन्तात्परे यथा निघातो नाम सर्वानुदात्तस्वरस्तथा धावति पश्येत्यत्र पश्य–शब्दस्यापि प्रसज्येत। तत्र दर्शनधावनयोः परस्परमन्वये सामर्थ्याभावादेव निघातस्वराप्रसक्तौ सौत्रमतिङ इति पदमनर्थकमापद्येतेति क्रिययोरपि परस्परमन्वयो वाक्यैकवाक्यतयावश्यमभ्युपेतव्यः। पदसम्बन्धिनो विधेः समर्थमात्राश्रिततत्वेन पूर्वपदव्यपेक्षारहिते निघातादिविधिर्न प्रवर्त्तत इति तद्विदो मन्त्रणीयाः। तथाच प्रकृते प्रतिज्ञाहेत्वोः पदैकवाक्यतैव। अतएव मूले साध्यनिर्देशान्तरं कुत इत्याकांक्षायां साधनत्वाभिव्यञ्जकविभक्ति– मल्लिंगवचनमेवोचितमित्यनेन विभक्त्यादिनिर्देशात् पदैकवाक्यतैव सूचयिंष्यते।

वाक्यैकवाक्यतया साधनत्वेनान्वये 'मलिनं ते वपुः' 'स्नाया' इत्यादौ साधनत्वाभित्यञ्जकविभक्तेरनुपयोगात् हेतुना च धूमस्य गमकत्वे प्रदर्शिते कथमस्य गमकत्वमित्याकांक्षायामुपपादकत्वसंगत्याभिहिते उदाहरणे तदर्थव्याप्तेरुपपाद्योपपादकभावसंसर्गेण गमकत्वेऽन्वयोऽत एव हेतावुक्ते कथमस्य गमकत्वमित्याकांक्षायामित्यादिमूलेन हेतूदाहरणयोरुपोद्घातः सूचयिष्यते, उदाहरणावयवयोरपि वाक्यैकवाक्यतयान्वयादेव धूमवान् धूमव्यापकवह्निमान् इत्यर्थलाभाद्यत्तच्छब्दयोरुभयोरपि महानसत्वेन महानसस्य पर्वतादेश्च केवलं बोधकतया तच्छब्देन धूमवतोऽनुपस्थापनात्। अतो यो यो धूमवानित्यादिवाक्येन महानसं धूमवत्पर्वतो धूमवानित्यादिकमुपस्थितम्, स वह्निमान् इत्यनेनापि महानसं वह्निमत् पर्वतो वह्निमान् इत्युपस्थितम्, ततो यत्तदर्थपरिहारेण वाक्यैकवाक्यतयैव धूमवान् धूमव्यापकवह्निमान् इत्यन्वयबोधः, यच्छब्दद्विर्वचनार्थव्यापकतायास्तत्रैव बुद्धावनुप्रवेशात्। अत एव यच्छब्दयोगोऽप्युद्देश्यताव्यञ्जकमध्ये परिगणितस्तत्पदार्थस्योद्देश्यत्वे तु तत्पदोपस्थितत्वं प्राथम्यं वा नियामकमित्येवाभ्यधास्यत्।

तस्मात् धूमवदुद्देश्यक—महावाक्यार्थ—बुद्धौ यच्छब्दघटितवाक्यजन्या धूमविधेयकोपस्थितिः कारणमिति वाक्यैकवाक्यतयोद्देश्य— विधेयभाव—प्रापकमित्यवसीयते। दृष्टान्तार्थोऽपि वह्निमति विशेषणतयैवान्वेति। एवम् उदाहरणार्थ उपनयार्थश्च द्वावप्युपपाद्योपपादकभावेन हेत्वर्थगमकत्वेऽन्वितः। अत एव व्याप्तिपक्षधर्मतयोरुभयोरपि उपदर्शनप्राप्तौ व्याप्तेः प्राथम्यादित्यादिना मूलेन हेतूपनययोरप्युपपादकत्वसंगतिः सूचयिष्यते। यदि पुनरुदाहरणोपनयार्थ—योरन्वयेऽभिनिवेशस्तदा भवतु व्याप्तिरित्यादिना मूलेन सहकारित्वेनान्वयः सूचयिष्यते। उपनय—निगमनयोस्तु पदैकवाक्यतैवेति वाक्यैकवाक्यतया पञ्चानामवयवा—नामेकविशिष्टार्थबोधकत्वं नानुपपन्नमिति दिक्।

साम्प्रदायिकानामेव सकलदर्शनसाधारणमवयवलक्षणं व्याचक्षाणानां मतमाह— **प्रतिज्ञादीति**। प्रतिज्ञादिभिः पञ्चभिः प्रतिपाद्या वह्निमत्पर्वत—धूमीयहेतुत्वादयो विशिष्टार्थास्तेषां ज्ञानपञ्चकं विषयतापञ्चकं तेषामन्यतमेन रूपेणावच्छिन्नं शाब्दबोधम्प्रति जनकवाक्यत्वमित्यर्थः। एतन्मते पर्वतो वह्निमानित्यानुपूर्वीज्ञानत्वावच्छिन्नकारणतानिरूपिता या वह्निमत्पर्वतावगाहिशाब्द—बुद्धित्वावच्छिन्ना जन्यता, या च धूमादित्यानुपूर्वीज्ञानत्वावच्छिन्नकारणतानिरूपित—धूमीया हेतुतेत्यन्वयबोधत्वावच्छिन्नकार्यतायाश्चापराः तिस्रस्तथाविधाः कार्यतास्तादृशकार्यतापञ्चकविशिष्टस्य न्यायमहानुपूर्वीज्ञानाव्यवहितोत्तरोत्पत्तिकस्य शाब्दबोधस्य महानुपूर्वीज्ञानस्य वा शाब्दबोधद्वारा कारणत्वमेकं, पर्वतो वह्निमानित्यापुनूर्वीज्ञानत्वावच्छिन्नकारणतानिरूपित—वह्निमत्पर्वतविषयक—शाब्दबुद्धित्वावच्छिन्न— कार्यताविशिष्टशाब्दबोधादेः पञ्चकार्थसहभावेनैव कारणत्वं तेषामैक्यमर्थसिद्धम्। तथा च तादृशानुपूर्वीज्ञानत्वावच्छिन्नकारणता—निरूपितकार्यतावत्त्वेन परामर्शजनकत्वम्। तादृशानुपूर्वीमत्त्वे सति न्यायघटक—त्वमवयवत्वमित्यक्षरतात्पर्यार्थः। **केचिदिति**, अवयवान्तरस्य तथात्वसम्भवेऽपि उदाहरणवाक्यार्थस्यैकस्याभावादुदाहरणवाक्यानुपूर्वीज्ञानत्वेन तत्र कारणत्वा—सम्भवादव्याप्तिः प्रतिज्ञाहेतुभ्यामुपनय—निगमनाभ्यां सम्भूयैकार्थबोधने तद्विषयत्वेनैव परार्थपरामर्शजनने हेत्वन्ते उपनयादौ च भागेऽतिव्याप्तिर्मतङ्गजो नील इत्यत्र गजो नील इति भागेऽतिव्याप्तितादवस्थ्यमित्यादिरस्वरससूचितः। **मूले ज्ञानविशेषेति**, निर्वचनान्यनुपपत्त्या न जातिसिद्धिस्तदभित्यञ्जक— धर्मान्तरावश्यकत्वे तत

एवानुगतव्यवहारोपपत्तिरिति भावः। तदेवोत्तम्भयति दीधितौ—तथाचेति— तादृशजातौ न्यायप्रतिज्ञादिप्रयोज्यजातौ। मूले—अन्यथेति, यदि निर्वचनान्यथानुपपत्त्या तल्लाघवेन वा जातिसिद्धिस्वीकार आवश्यकस्तदा पृथिवीजलोभयनिर्वचनादेका, जलते–जोलक्षणनिर्वचनादपरा जातिः सिद्ध्येदिति जातिसंकरप्रसंग इत्यर्थः। परार्थत्वानुमिति परामर्शत्वे तु न निर्वचनलाघवात्सिद्धेः, किन्तु कारणवैजात्या– देवेतिभावः। दीधितिकारस्तु प्रतिज्ञादिप्रयोज्यजातीनां संकरप्रसंगपरतया मूलं योजयति– बाधकमित्यादिना। सुतरामिति, अननुगतजाते– र्निर्वचनस्यानु– पपाद–कत्वादितिभावः। मिश्रमतमाह— केचित्त्विति—उदक्षरत्वमस्वरसः।

**चिन्तामणिः—**

तत्र प्रतिज्ञा न साध्यनिर्देशः साध्यपदेऽतिव्याप्तेः, किन्तूद्देश्यानुमिति–हेतुलिंगपरामर्शप्रयोजक– वाक्यार्थज्ञानजनकत्वे सति उद्देश्यानुमित्य–न्यूनानतिरिक्त– विषयकशाब्दज्ञानजनकवाक्यत्वम्। अन्यूनानतिरिक्तपदं विहाय लिङ्गाविषयकत्वं वा ज्ञानविशेषणम्, तेनोदाहरणादिव्युदासः। निगमनं च न परामर्शहेतुः, अबाधिता—सत्प्रतिपक्षिततत्वज्ञानजनकत्वात्। हेत्वभिधानप्रयोजकजिज्ञासाजनक– वाक्यत्वं वा, लिङ्गाविषयक–लिङ्गिविषयकज्ञानजनक—न्यायावयव– वाक्यत्वं वा, इतरावयवानां लिङ्गविषयकज्ञानजनकत्वादिति।

प्रतिज्ञात्वं जातिः, अनुगताननतिप्रसक्ततान्त्रिकव्यवहारादिति केचित्, तन्न, देवदत्तप्रभवत्वादिना जातिसंकरप्रसंगात्। प्रतिज्ञाजन्यं विजातीयं ज्ञानं व्यवहारादिति तज्जनकं वाक्यं प्रतिज्ञेत्यपि न, तज्जनकत्वं जज्जनकत्वज्ञानं वा नानुगतरूपमन्तेरण सम्भवतीत्युक्तस्यानुसरणीयत्वात्। एतेन शब्दो नित्य इति लिङ्गिधीपरवाक्य—जन्यज्ञानवृत्ति– कृतकत्वा–दित्यादिवाक्य– जन्यज्ञानावृत्ति – जातियोगिज्ञानजनक– वाक्यं प्रतिज्ञेति निरस्तम्। ननु प्रतिज्ञानं साधनाङ्गं, विप्रतिपत्तेः, पक्षपरिग्रहे तत्र प्रमाणाकांक्षायां हेत्वभिधानस्य प्राथम्यादिति चेन्न, विप्रतिपत्त्यग्रे समयबन्धानन्तरं शब्दानित्यत्वं साधयेति मध्यस्थस्य वादिनो वाकांक्षायां शब्दानित्यत्वं साध्यम्, न च साध्यनिर्देशं विना हेतुवाक्यं निष्प्रतियोगिकमन्वयं

बोधयितुमीष्टे। न च वादिवाक्येऽनुपस्थितमपि योग्यतयान्वेति, अतिप्रसंगात्। नच विप्रतिपत्तित: साध्योपस्थिति:, तस्या: प्रतिवादिविप्रतिपत्त्या प्रमाणादिव्यवस्थयान्तरतित्वात्, परविप्रतिपत्तिं समयबन्धं च विना स्थापनाया अभावात्, विप्रतिपत्तिवाक्यस्य पक्षपरिग्रहेण पर्यवसिततया निराकाङ्क्षत्वाच्च। आवृत्तौ तु सैव प्रतिज्ञा। न चावयवान्तराद्धेत्वन्वययोग्या साध्योपस्थिति:, नाप्यवयवान्तरेणाक्षेपात्। तस्मात्प्रतीत्यनुपपत्त्या प्रतीतानुपपत्त्या वा नेहाक्षेप:। साध्यान्वये तदभिधानम्, तदभिधाने च साध्यान्वय इत्यन्योन्याश्रयात्। अन्ये तु शब्दानित्यत्वे प्रमाणं वदेति यदि मध्यस्थस्यानुयोग:, तथापि प्रमाणमात्रे नाकांक्षा, किन्तु विशिष्टे। विशिष्टन्तु— विशेषणं साध्यमनभिधाय न शक्याभिधानम् न च वस्तुतो यत् साध्यं तत्र प्रमाणं वदेति मध्यस्थनियोग:, वादि—द्वयमध्ये तदसम्भवात्। तस्मात् साध्याभिधानं विना न हेतोराकांक्षा न वान्वयबोधकत्वमिति प्रतिज्ञासाधनाङ्गमिति।

।। इति चिन्तामणौ प्रतिज्ञालक्षणम्।।

दीधिति:

साध्यनिर्देश:— प्रतिज्ञेति सूत्रम्। साध्यो विधेयधर्मविशिष्टो धर्मी। तथा च पक्षतावच्छेदकपर्वतत्वादिविशिष्टे साध्यतावच्छेदकवह्नित्व—विशिष्टवैशिष्ट्यज्ञानजनको न्यायावयव इति पर्यवसितार्थ:। उदाहरणाच्च पक्षतावच्छेदकविशिष्टे न साध्यवैशिष्ट्यज्ञानम्। उपनयाच्च पक्षता—वच्छेदकविशिष्टे न साध्यतावच्छेदक— विशिष्ट—वैशिष्ट्यज्ञानमिति तयोर्व्युदास:। किन्त्वित्यादि, प्रकृतन्यायबहिर्भूतवाक्यवारणाय सत्यन्तम्, प्रकृतन्यायावयवत्वपर्यवसितम्। उद्देश्येति— प्रकृतेत्यर्थ: वह्निसाध्यकोपनयस्य वह्निव्याप्यधूमसाध्यकानुमित्यन्यूनानतिरिक्तविषयकशाब्दबोधजनकस्य वारणाय प्रकृतद्वयम्। तथाच—यादृशपक्षसाध्यकन्यायावयवत्वं तादृशपक्षसाध्य—कानुमित्यन्यूनानतिरिक्तविषयक— शाब्दज्ञानजनकत्वं पर्यवसितोऽर्थ:। धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यादावनतिरिक्तविषयकज्ञानजनकस्य

हेतोर्वारणायान्यूनेति। निगमनवारणायानतिरिक्तेति। यद्यपि निगमने साक्षात् पक्षवाचकपदं न श्रूयते, तथापि न्यूनताभङ्गायोपनयस्थायमादिपदस्यानुषङ्गात्तथा बोध्यम्।

इत्थमेव च प्रसक्तामतिप्रसक्तिं निगमनं चेत्यादिना निराकरिष्यति। तदर्थश्च — निगमनमन्यूनातिरिक्तविषयकशाब्दज्ञानजनकं सन्न परामर्शहेतुः, येन निरुक्तन्यायावयवत्वरूपं प्रतिज्ञात्वं तदपि व्याप्नुयात्। अबाधितत्वादेस्तद्–बोधौपयिकविशिष्टहेतुसम्बन्धस्य च बोधकतया तस्यातिरिक्तविष–यकज्ञानजनकत्वादिति। यत्तु पृथिवीतरेभ्यो भिद्यते पृथिवीत्वादित्यादौ यन्न पृथिवीतरेभ्यो भिद्यते तन्न पृथिवीत्युदाहरणवारणाय तदिति तत्तुच्छम्, तेन पृथिव्यामितरभेदस्याविषयीकरणात्। तात्पर्यभ्रमेण तादृशबोधजनकत्व–स्यातिप्रसक्तत्वात्। न च तावताप्युदाहरणस्य तथात्वसंभवः, यन्नेत्यादेरनन्वयात्। यदि च निगमने नायमादिपदं निविशते वाक्यैकवाक्यतयैव विशिष्टार्थभानादिति विभाव्यते, तदा हेतौ साध्यसामानाधिकरण्यभाने सामान्यतः पक्षेऽपि साध्यवत्त्वभानात् पक्षे हेतुव्यापकसाध्यसामाना–धिकरण्यविशिष्ट–हेतुमत्ताबोधकस्योपनयस्य, यत्र च पक्षसाध्ययोस्ताद्रूप्येण दृष्टान्तत्वहेतुत्वाभ्यामुपन्यासः तादृशसिषाधयिषया च न्यायप्रयोगस्त–त्रोदाहरणोपनययोः, यत्र वा पर्वतत्वाद्यवच्छेदेन साध्यसिद्धेरुद्देश्यताया–मेतत्पर्वतत्वादिना दृष्टान्तस्योपन्यासस्तत्रोदाहरणस्य सत्यन्तस्य चावयव–घटकन्यायान्तर्गतत्वपरतया हेत्वन्तस्यायमादिनिगमनान्तभागस्य वारणाय तत्। यद्यपि सर्वमभिधेयं प्रमेयमित्यादाव– तिरिक्ताप्रसिद्धिः, न च कोट्यप्रसिद्ध्या प्रमेयं न वेति विप्रतिपत्तेः संशयस्य चायोगान्न तादृशी प्रतिज्ञा, प्रकृतानुमितिप्रकारतासमव्याप्तप्रकारताकत्वं वा वक्तव्यमिति वाच्यम्, सकलाभिधेयवृत्तिधर्मवत् सकलाभिधेयनिष्ठात्यन्ताभावाप्रतियोगि आकाशाभाववद्वा इदं द्रव्यमित्यादौ। विशिष्टपक्षबोधके उपनयेऽतिव्याप्तेः, तथापि प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यविषयत्वं तदन्यूनविषयत्वम्। पञ्चम्यर्थपक्षकप्रतिज्ञादिस्थले तु पक्षे प्रकृत्यर्थस्य वैशिष्ट्यबोधको हेतुर्न तु

प्रकृतहेतुकप्रकृतसाध्यस्य। तादृशविषयता— विलक्षणविषयताशून्यत्वम् प्रकृतहेतुक—प्रकृतसाध्यसिद्ध्यौपयिक— व्याप्तिविषयकत्वं वा तदनतिरिक्त— विषयकत्वम्। वह्निव्याप्यालोकवत्सधर्मा पर्वतो वह्निमान् धूमाद्, इन्धनव्याप्य— धूमवान् पर्वतो वह्निमान् धूमादित्यादौ तस्या: संग्रहाय प्रकृतहेतुसाध्ययोरुपा— दानम्। वह्निव्याप्यधूमवान् पर्वतो वह्निमान् धूमात्, सत्तादिव्याप्यद्रव्यवदिदं सत्तादिमद् द्रव्यत्वादित्यादयस्तु न प्रयोगा: विशिष्टपक्षोपस्थापकादेव तादृशव्याप्तिप्रतीतौ आकांक्षाविरहेणोदाहरणा— नुत्थानाद् अन्यथाऽतिप्रसंगात्। अतएव नैकदोभयव्याप्त्युपन्यासोऽपि। यदि च मैत्र: पचति अयं गौरित्यादेरेव प्रतिज्ञाया: तथोपवर्णित— विशिष्टज्ञानजनकत्वसंभव:, तादात्म्येन गो: साध्यत्वात् गोत्वत्वाद्यनुपस्थित्या गोत्वादे: साध्यत्वानुपपत्ते: पदार्थतावच्छेदकजातौ हेत्वर्थान्वयायोगाच्च वह्निमानित्यादौ पुनरनुमितौ पक्षे साध्यस्य वह्ने: संयोगात्मक: सम्बन्धो भासते तथैव वह्निव्याप्य धूमवानयमित्युपनयसंगमात्। शाब्दबोधे तु वह्निमतोऽभेद:, एवं भेदे साध्ये भिद्यते भिन्नमित्यादावपि वैलक्षण्यमिति सूक्ष्ममीक्ष्यते—तदा यादृशपक्षसाध्यिका: पक्षे यादृश— यादृशविशिष्टार्थबोधिका: प्रतिज्ञा: सम्प्रदायसिद्धा: तादृशानां बोधानामन्यतमेनाप्यनिवर्त्यस्य संशयस्यानिवर्त्तको यस्तावद्बोधानामन्यतमो बोधस्तज्जनकत्वं वक्तव्यम्। एवं च तादात्म्येन गवि साध्ये पक्षे गवाभेदस्य, संयोगेन समवायेन वा वह्नौ। वह्निमदभेदस्य, समवायेन पाकस्य कृतौ पाककृतिमत्त्वस्य, पाककर्त्रभेदस्य, विशेषणतया इतरेभ्यो भेदे इतरभेदवत्त्वस्य, इतरान्याभेदस्य, इतरभेदवत्त्वस्य, इतर— भिन्नाभेदस्य बोधा विशिष्य धर्तव्या इति दिक्।

तावद्बोधानिवर्त्यसंशयानिवर्त्तकतावद्बोध—निवर्त्य यावत्संशय— निवर्त्तकबोधजनकत्वं वाच्यमित्यपि कश्चित्। चैत्र: पचति, घटो नेतराणीति प्रतिज्ञायां साध्ये विषयत्वानुयोगित्वयो: सम्बन्धविधयैवानुप्रवेशात् यथोपदर्शितं— साध्य—गमकतौपयिकव्याप्तिविशिष्ट—हेतुमत्त्वस्य च पक्षे उपनेयत्वात्तथा चाऽयमित्याकारक: सुवच एव प्राचामुपनय:।

नव्यानां पुनरनन्यगतिकतया तद्व्याप्यहेतुमान् तद्वान् वेत्याकारो

योग्यतावशाच्च तदा साध्यस्य तद्व्याप्यस्य वा परामर्शः। केचित्तु वह्निमान्नवेति विप्रतिपत्तौ संशये च वह्निमत्तदन्योन्याभावयोस्तादात्म्यविशेषणत्वाभ्यां कोटित्वेन जिज्ञासितत्वात्। तथा चायमित्याकारको वह्निमद्व्याप्य – धूमवाँश्चायमित्याकारको वा उपनयः, न तु वह्निव्याप्यधूमवांश्चाय– मित्याकारकोऽर्थान्तरत्वादिति प्राहुः।

यत्र चाऽन्तरा तादृशबोधो न जनितस्तत्रापि तादृशाकांक्षायोग्यताशालित्वरूपं तज्जननयोग्यत्वमक्षतम् तल्लाभश्च जातिविशेषोपस्थापकशाब्दवाक्यपदयोरुपसन्धानादेवेति। अन्यूनेत्यादि। तथा चोद्देश्यानुमितिसमानविषयक– लिङ्गाविषयकशाब्दज्ञानजनक– न्यायावयवत्वमर्थः। व्यतिरेकिणि ह्रदो निर्धूम इत्यादौ, निर्वह्नित्वहेतुके यथा ह्रदभिन्नमितिदृष्टान्तवतो ह्रदावृत्तिधर्मशून्यत्वादिहेतुके वा उदाहरणस्य वारणाय समानविषयकान्तम्, पक्षमुख्यविशेष्यकार्थकम्। उपनयवारणाय लिङ्गाविषयकेति। यद्यपि प्रकृतलिंगाविषयकत्वं पृथिवीतरेभ्यो भिद्यते पृथिवीत्वाद् गन्धवती तथा गन्धादित्यादावव्यापकम्। न चात्रोपनयासम्भवः, इदमो गन्धवत्त्वेन परामृष्टे हेतभूतगन्धवत्त्वान्वव्यतिरेकिणि न च नेयं पृथिवीत्यादिकः प्राचां प्रयोगः।

यदि च दण्डवान् रक्तदण्डवानित्यस्यान्वयो नानुपपन्नः तद्विशिष्टे शुद्धतद्विशिष्टान्वयस्यैवाव्युत्पन्नत्वादित्युच्यते, तदा नानुपपत्तिगन्धोऽपि। पक्षविशेषणत्वेन तद्विषयकत्वञ्चायं वह्निसामग्रीमान् वह्नेरित्यादौ पक्षाविशेषणत्वेन साध्याविशेषणत्वेन तदविषयकत्वञ्च, दधि द्रव्यं दध्नः प्रमेयत्वमभिधेयं प्रमेयत्वात्, गोत्वाभावो न सास्नादिमान् गोत्वाभावादित्यादावव्यापकमतिव्यापकञ्चोपनयस्य। तथापि पक्षतावच्छेदकविशिष्टपक्षे यत्साध्यतावच्छेदकविशिष्ट– साध्यवैशिष्ट्– यावगाहित्वं तद्बहिर्भावेण लिंगविषयत्वस्याभावो वाच्यः। वस्तुतो लिङ्गं लिङ्गत्वम्। तथा च प्रकृतहेतुतावच्छेदकावच्छिन्नस्य प्रकृतसाध्य– तावच्छेदकावच्छिन्नगमकतौपयिकं यद् व्याप्तिविषयकत्वं तच्छून्यत्वमर्थः। तच्च हेतौ साध्यव्याप्यत्वावगाहित्वं, हेतुभूताभावप्रतियोगितावच्छेदकावच्छिन्ने

साध्याभावव्यापकत्वावगाहित्वं च द्रव्यत्वव्याप्य–संयोगवद्वृत्तिधर्मवानयं द्रव्यत्ववान् गुणात्। गुणव्याप्यरूपवानयं स्पर्शवान् रूपादित्यादौ प्रतिज्ञासंग्रहायावच्छेदकद्वयोपादानम्। अन्यूनानतिरिक्तपदमिति च मूलमुद्देश्यानुमित्यन्यूनानतिरिक्तविषयभागपरम्। हेतुत्वमभिधेयं प्रमेयत्वादित्यादौ पञ्चम्यर्थपक्षकहेतुवारणाय पञ्चम्यन्तान्यत्वस्य हेत्वन्यत्वस्य वाऽवश्यं वाच्यत्वात्। संख्यातिरिक्त–सुबर्थस्य प्रकृत्यर्थविशेष्यत्वेनैवान्वयात्। प्रातिपदिकार्थयो: क्रिया– प्रातिपदिकार्थयोश्च साक्षाद् भेदेनाऽन्वयस्याऽव्युत्पत्ते र्वक्ष्यमाणत्वात्। चैत्रस्येदं न मैत्रस्य, द्वयोरिदं नेदमेकस्यापीत्यादौ चैत्रादिसम्बन्धाभावबोधस्य विभक्त्यर्थविशेष्यतां विनाऽनुपपत्ते:, चैत्रो न पचतीत्यादौ तिङर्थस्येव विनाप्यनुयोगिनीं सप्तमीं सुबर्थस्यांप्यभावान्वयात्। हेतुविषयकज्ञानजनकत्वव्याप्याऽवयवतावच्छेदकरूपशून्यत्वे सति उदाहरणान्यन्यायावयवत्वं तत्त्वम्। तादृशावच्छेदकं हेतुत्वादिकमिति केचित्।

**हेत्वभिधानेति**। जिज्ञासाजनकत्वं– तद्योग्यता। वाक्यत्वं– न्यायावयवत्वम्। **लिंगेत्यादि**। लिङ्गाविषयकेति– पूर्वोपदर्शितार्थकम्। अभावहेतुकव्यतिरेक्युदाहरणवारणाय लिङ्गीति। लिङ्गी साध्यम्, तद्विषयकं– तद्वद्विशेष्यकम्। तेनेदं जलं नि:स्नेहत्वप्रकारकप्रमाविषयशून्यत्वात्, इदं द्रव्यं जलान्यत्वप्रकारकप्रमाविषयशून्यत्वात् इदं द्रव्यं जलान्यत्वप्रकारक– प्रमाविषयत्वशून्यत्वादित्यादौ यन्न जलं तन्नि:स्नेहत्वप्रकारकप्रमाविषय इत्युदाहरणे नातिप्रसंग:। लिङ्गाविषयकेत्यस्य पूर्वोक्तव्याप्यत्वाविषयकार्थकत्वे तु हेतुवारणाय **लिङ्गीति**। लिङ्गी विषयकत्वं च प्रकृतहेतुता– वच्छेदकावच्छिन्नहेतुविशिष्ट– हेतुत्वविषयताबहिर्भावेण वाच्यम्। तेन वह्निमान् वह्निसामग्रीमत्त्वांद् अयं हेतुरिदं वा हेतुत्वं तत्त्वेन प्रतीयमानत्वादित्यादौ नातिप्रसंग:। लिङ्गविषयकज्ञानजनकत्वाऽनियत– लिङ्गिविषयकज्ञानजनकत्व– नियतावयवतावच्छेदकरूपवत्त्वं तत्त्वमित्यादिकं तु तादृशरूपान्तरापरिचये दुर्ग्रहत्वादनुपादेयम्।

**इति दीधितौ प्रतिज्ञालक्षणम्।**

दीधितिविद्योतः—

यथाश्रुतमनूद्य मूले दूषितमपि सूत्रं स्वयं परिष्कुरुते—साध्येत्यादि। **विशिष्टे** इति — तदुद्देश्यकेत्यर्थः। वैशिष्ट्येति तद्विधेयकेत्यर्थः। तथा च पक्षतावच्छेदकावच्छिन्नोद्देश्यतानिरूपितसाध्यतावच्छेदकधर्म—संसर्गोभयावच्छिन्ना विधेयता तद्वद्वाक्यार्थबुद्धिजनकत्वे सति न्यायावयवत्वमर्थः। पर्वतो वह्निमानिति प्रतिज्ञावाक्याच्च पर्वतमुद्दिश्य वह्नि र्विधीयते, न तु वह्निमान्, अन्यद्धि प्रकारविशेष्यत्वादि, अन्यदेव च विधेयोद्देश्यत्वम्। अतएव गुणानां गुणत्वमिति वाक्ये गुणमुद्दिश्य गुणत्वं विधीयत इति **वर्द्धमानोपाध्यायाः**। मतुबर्थस्तु पदार्थतया प्रकारभूतो विधेयतावच्छेदक— संसर्गीभूयापि भासतेऽत एव विषयतया ज्ञाने साध्ये समवायेन हेतौ तस्मिन्नुपनये नातिव्याप्तिरुपनये ज्ञानविधेयतायाः साध्यतावच्छेदकसम्बन्धानवच्छेद्यत्वात्। सिषाधयिषया च न न्यायप्रयोगः, येन वह्निसाध्यकतद्धेतुकन्यायोपनयेऽतिव्याप्तिः स्यात्। पक्षतावच्छेदकावच्छेदेन साध्यासिद्धेश्यतायां तत्सामानाधिकरण्येन पर्वतस्य दृष्टान्तत्वाभ्युपगमेऽपि नोदाहरणेऽतिव्याप्तिः। पक्षतावच्छेदकविशिष्टे इत्यस्य फलमाह— **उदाहरणाच्चेति**। साध्यतावच्छेदकेत्यादेः फलमाह— **उपनयाच्चेति**। वस्तुतः प्रतिज्ञासहकारेणावयवान्तरस्यापि तादृशबोधजनकत्वात्साध्यतावच्छेदकावच्छिन्नविधेयता—निरूपितपक्षतावच्छेदकावच्छिन्नोद्देश्यताशालिशाब्दबुद्धित्वावच्छिन्न—कार्यतानिरूपितकारणता यज्ज्ञानित्वेनावच्छिद्यते तादृशावयवतावच्छेदकानुपूर्वीमत्त्वं मूलार्थोऽवश्यमभ्युपेतव्य इति साध्यतावच्छेदक— पक्षतावच्छेदकयोरप्रवेशादसम्भव एव स्यादतो द्वयमुपात्तमित्यवधेयम्।

**मूले— किन्तूद्देश्येति,** अत्रैवं विधानुमिताविपं प्रतिज्ञेति प्रामाणिक व्यवहारगोचरवाक्यत्वं लक्ष्यतावच्छेदकमथवा तादृशवाक्यार्थ— निर्वचनपरमिदम्। तत्राप्युद्देश्यानुमितिपदद्वयं कण्ठोक्तानुवाद इतरत्सप्तम्यर्थ— निर्वचनम्—उद्देश्यानुमितिः पर्वतो वह्निमानित्यादिः परार्थानुमितिः तद्धेतुर्यो लिङ्गपरामर्शस्तस्य प्रयोजकं जनकं यद्वाक्यार्थज्ञानं तज्जनकत्वे तदव्यवहितपूर्ववर्त्तिज्ञानविषयानुपूर्वीमत्त्वे सतीत्यर्थः। यादृशानुपूर्वीज्ञानाव्यवहितोत्तरोत्पत्तिक—वाक्यार्थज्ञानत्वेन तादृशपरामर्शजनकत्वं तादृशानुपूर्वीमत्त्वे सतीति यावत्। आनुपूर्वी तु तादृशोत्तरत्वस्वरूपा चरमवर्णमात्रे तादृशपूर्वत्वस्वरूपा प्रथमवर्णमात्रे

कतिपयवर्णपूर्वोत्तरत्वद्वयघटितमध्यत्वरूपा मध्यवर्णमात्रे विश्राम्यति इति सर्वेऽपि न्यायघटका वर्णास्तादृशानुपूर्वीमन्तस्तेन न्यायत्वे सतीति फलितार्थ:। न्यायत्वं समुदायत्वं व्यासक्तमित्येकदेशिनामभिमानमात्रम् उद्देश्यपदसम– भिव्याहाराच्च प्रकृतपक्षसाध्यकन्यायत्वं लभ्यते, तेन पर्वतपक्षक– वह्निसाध्यक–प्रतिज्ञालक्षणे द्रव्यं वह्निमद्–वह्निमत्पर्वतादित्यत्र हेत्ववयवस्य वह्निमत्पर्वतभागे नातिव्याप्तिस्तस्थापि मध्यमत्वस्वरूपानुपूर्वी द्रव्यपक्षक–वह्निसाध्यकन्यायानुपूर्वीमत्त्वात्, न वा हेतुत्वं धूमीयमिति प्रतिज्ञालक्षणे हेतुत्वपक्षकन्यायान्तरीये धूमादित्यवयवेऽतिव्याप्तिस्तस्य प्रकृतसाध्यक– न्यायविरहात्। एवमपि वह्निसाध्यक–पर्वतपक्षक–प्रतिज्ञालक्षणे धराधरो वह्निमानिति प्रतिज्ञैकदेशे धरो वह्निमानित्यत्र धरापदव्यवकलितानुपूर्व्या: प्रतिज्ञाव्यवहारनिमित्तत्वं स्यादिति वाक्यत्वमुपात्तम्। तदर्थस्तु यादृशा– नुपूर्वीज्ञानत्वेनानुमिति– समान–विषयकवाक्यार्थबोधजनकत्वं तादृशानुपूर्व्यन्तर्गतत्वं फलत आनुपूर्वी–विशेषणम्। एतावन्मात्रमपि हेत्वाद्यवयवेऽतिव्याप्तमत उद्देश्यानुमित्यन्यूनेति।

तथा च पर्वतो वह्निमानित्येतावन्मात्रविषयताको योऽन्वयबोधस्तज्जन– कतावच्छेदकानुपूर्वीमत्त्वमित्यर्थ:। एवं पर्वतपक्षक–वह्निसाध्यक–न्यायत्वे सति पर्वतो वह्निमानित्यन्वयबोधत्वावच्छिन्न–कार्यतानिरूपित–कारणता वच्छेदकानुपूर्व्यन्तर्गता या तादृशान्वयबुद्धित्वावच्छिन्नकार्यतानिरूपित– कारणतावच्छेदकानुपूर्वी सा पर्वतपक्षकवह्निसाध्यकप्रतिज्ञाव्यवहारनिमित्तमिति समुदायार्थ:। अत्र पर्वतत्वावच्छिन्नोद्देश्यतानिरूपित–केवल वह्नित्वावच्छिन्नविधेय– ताकान्वयबोधत्वस्य कार्यतावच्छेदकत्वंलाभायान्यूनानतिरिक्तेति, अन्यथा धूमवान् वह्निमानित्यर्थकोदाहरणैकदेशे स वह्निमानित्यत्र हेत्वन्तभागेऽयमादिनिगमनान्तभागे चातिव्याप्ति: स्यादिति ध्येयम्। दीधितौ तु पौर्वापर्यापन्नवर्णवृत्तिसमुदायत्वविशेष: प्रतिज्ञात्वं, स च पर्याप्त्या स्वाश्रये प्रतिज्ञाव्यवहारं जनयति। तत्परिचायकमिदं लक्षणमिति वासना। प्रकृतन्यायेति पर्याप्तिभिन्नैकसमुदायत्ववानिति प्रात्यक्षिकेण सम्बन्धेन न्यायपर्याप्तसमुदायत्ववत्त्वे सति यादृशसमुदायत्वावच्छेदे– नावयवत्वव्यवहारस्तत्पर्याप्त्यधिकरणत्वे सति इत्यर्थकं सत्यन्तमित्यर्थ:। मतङ्गजो नील इत्यत्र गजो नील इति भागवारणायावयवव्यवहार –प्रयोजकसमुदायत्वान्यून– वृत्तित्वमपि मुख्यसमुदायत्वे विशेषणम्। अथवा यादृशसमुदायत्वावच्छेदेन

प्रकृतन्यायावयवत्व—व्यवहारस्तादृशसमुदायत्वे सति इत्येव सत्यन्तार्थः, स्वोक्तस्य प्रकृतपदस्य मूलोक्तस्योद्देश्यपदस्य च प्रयोजनमेकोक्त्या वक्तुं प्रकृतद्वयमित्यत्र वाग्वैचित्र्यसम्पादनायोद्देश्यपदं प्रकृतपदेन निर्दिशति — **प्रकृतेत्यर्थ** इति, उद्देश्येति पदं प्रकृतेतिपदस्यार्थः पर्याय इत्यर्थः।

**प्रकृतद्वयमिति**— न्यायप्रकृतपदानुपादाने पर्वतपक्षक—वह्निव्याप्यधूम—साध्यकप्रतिज्ञालक्षणे—वह्निसाध्यकोपनयेऽतिव्याप्तिरनुमितौ प्रकृतपदानुपादाने पर्वतपक्षक— वह्निसाध्यकप्रतिज्ञालक्षणे तदुपनयेऽतिव्याप्तिःस्यादिति प्रकृतिपदद्वयमवश्यं देयमित्यर्थः। एकत्र लक्षणे पदद्वयसार्थक्ये तु यथाभिनिवेशस्तदा पर्वतपक्षकवह्निव्याप्यधूमसाध्यक—प्रतिज्ञालक्षणे न्याये प्रकृतत्वाप्रवेशे वह्निसाध्यकोपनयेऽतिव्याप्तिरनुमितौ प्रकृतत्वाप्रवेशे वह्निव्याप्यधूमयाप्य—वानयमित्युपनय एवातिव्याप्तिः स्यादिति प्रकृतपदद्वयं व्यावर्तनीयमनुसर्तव्यम्। समुदायार्थमनुवदति **तथा चेत्यादि**। यादृशपक्षक—न्यायावयवत्वमेतावति कृते पर्वतपक्षकवह्निव्याप्यधूमसाध्यक—प्रतिज्ञालक्षणस्य पर्वतपक्षकवह्निसाध्य—कोपनयेऽतिव्याप्तिः स्यादिति साध्यमपि यादृशत्वेन विशेषितम्। यादृशसाध्यकन्यायेति कृते विषयतात्वावच्छिन्नपक्षक— तदनुमिति— विषयताकज्ञानजन्य— ज्ञानीयत्व—साध्यक—प्रतिज्ञालक्षणे ज्ञानीयत्वविशिष्टविषयता तदनुमितिविषयतात्व—ज्ञानजन्यज्ञानीया तदनुमितिविषयतात्वादिति न्यायीय—हेत्ववयवेऽतिव्याप्तिः स्यादिति तद्धर्मावच्छिन्नपक्षकत्वमपि न्याये तदवयवे वा विशेषणम्। सति च विशेषणे शुद्धविषयतात्वावच्छिन्नपक्षकतदनुमिति— विषयतात्वज्ञानजन्य—ज्ञानीयत्वसाध्यक—न्यायावयवत्वाभावादेव तत्र नातिव्याप्तिः, शुद्धविषयतायां तदनुमितिविषयतात्वज्ञान—जन्यज्ञानीयत्वे साध्ये तदनुमितिविषयतात्वादिति हेतुघटितो न्याय एव न सम्भवति, प्रतिज्ञाहेत्वोः पौनरुक्त्यप्रतिहतत्वादिति स्वयमेव दीधितिकृताभिधास्यते।

यदि पुनरुचितानुपूर्वीकोऽसल्लिंगकोऽपि न्यायत्वेन तदवयवाश्च प्रतिज्ञात्वादिना संग्राह्याः, अतएव कथायामेकतरस्याःस्थापनाया आभासत्वनियमेऽपि न्यायाभ्यां कथारम्भ इत्युपपद्यते, तदा बुद्धिविषयता धूमज्ञानजन्यज्ञानीया धूमादितिन्यायस्य हेत्ववयवे शुद्धविषयता धूमज्ञानजन्यज्ञानीया धूमलिंग—कानुमितिविषयतात्वादितिन्यायीयप्रतिज्ञालक्षणातिव्याप्तिवारणाय तद्धर्मा—वच्छिन्नपक्षकत्वं न्याये विशेषणम्। तस्य यादृशसाध्यक—न्यायावयवत्वं

तादृशपक्षकत्वमात्रप्रवेशे पर्वत–पक्षकवह्निसाध्यकप्रतिज्ञालक्षणे तत्रत्योपनयातिव्याप्ति: स्यात्, तज्जन्यज्ञानस्यापि पर्वतो वह्निव्याप्यधूम– वानित्यनुमितिसमानविषयकत्वादिति तादृशसाध्यकत्वमनुमितिविशेषणम्, तावन्मात्राभिधाने तु बुद्धिविषयता धूमज्ञानजन्यज्ञानीया, धूमादिति हेत्ववयवे च प्रतिज्ञालक्षणमतिप्रसज्येत। हेत्ववयवजन्यज्ञानस्य विषया धूमज्ञानजन्यज्ञानीयेति तादृशसाध्यकानुमित्यन्तरसमानविषयकत्वादिति तादृशपक्षकत्वमनुमिति–विशेषणम्।

वस्तुतोऽनतिरिक्तविषयकत्वं तादृशविषयताकानुमितित्वाव्यापकविषयताशून्यत्वम्, तथा च वह्निसाध्यकानुमितित्वादेरव्यापिका पक्षादिविषयतेति तच्छून्यत्वमसम्भवि स्यादिति साध्यपक्ष– तदवच्छेदकसंसर्गाणां प्रतिस्वं प्रवेश आवश्यक इति ध्येयम्। धूमादित्यादि–आलोको ज्ञेयं वस्तु, तेन धूमादिति हेत्ववयवे नालोकभिन्नवृत्तिज्ञाप्यताया अपि विषयीकरणादनतिरिक्तपदेनैव न तन्निवारणम् इति ध्येयम्। साक्षात्प्रत्यक्षतावच्छेदकरूपेण मतुपा पुनरधिकरणत्वेनैवोपस्थाप्यते। न्यूनतेति– असति पक्षवाचकपदानुषङ्गे पौनरुक्त्यप्रतिसन्धानाभावादबाधितत्वाद्यनपेक्षेणानुमितिसामग्री न्यूना स्यादिति भाव:। अनुषङ्गादिति– अत्रेदमवधेयम्–यत्र सम्पूर्णन्यायघटकवाक्यानामनुसन्धानात्मकं हेत्वाद्यवयवेष्वयोग्यत्व– निराकांक्षत्वाद्यनुसन्धानस्वरूपं तत: प्रतिज्ञामात्रार्थस्य वाक्यार्थबोधस्तत्रानतिरिक्तपददानेऽपि हेत्ववयवेऽतिव्याप्ति: जनकपदस्य जनकज्ञानविषयत्वार्थकत्वावश्यकत्वेन हेत्ववयवादावपि तस्याक्षतत्वात्। अथान्यूनपदोपसन्दानेन प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिशाब्दबुद्धित्वावच्छेदेन यादृशानुपूर्वीज्ञानत्वेन कारणता तद्वत्त्वं विवक्षितमिति न हेत्वादिवाक्येऽतिप्रसंग इति चेत्, तत् किं येन रूपेणावयवत्वं तादृशानुपूर्वीज्ञानत्वे कारणत्वमुत येन केनापि रूपेण? आद्ये–कथं निगमनेऽतिव्याप्तिस्तत्र ह्यवयवत्वं तस्माद्वह्निमानित्यानुपूर्व्यवच्छेदेन पर्वतो वह्निमानिति वाक्यार्थबुद्धिजनकत्वं त्वनुषक्तायमादिपदघटितानुपूर्वीज्ञानत्वेनैवेति वैषम्यात्, अनुषक्तपदस्य निराकांक्षत्वप्रतिसन्धाने ततो वाक्यार्थबुद्ध्यभावे तादृशानुपूर्वीज्ञानस्य कारणत्वावश्यकत्वात्। पौर्वापर्यमेव हि पदानां दीधितिकृतां मते आकांक्षा, द्वितीयेऽनुषक्तायंपदघटितवह्निमत्पदानुपूर्वीज्ञानत्वेन वह्निमत्पर्वतमात्रविषयकज्ञानजनकत्वात् तादृशानुपूर्वीमादायानतिरिक्तपददानेऽपि निगमनातिप्रसक्ते र्दुर्वारत्वापत्ति:।

अथ न्यायावयवत्वं प्रयोजकसमुदायत्वावच्छेदेन वह्निमत्पर्वतबोधकत्व–प्रयोजकानुपूर्वीमत्त्वं विवक्षितम्। अयं वह्निमानित्यानुपूर्वी तु न न्यायावयवसमुदाय–त्वावच्छेदेन वर्तते तस्मादित्यंशे तदभावात्। उत्तरत्व–मध्यमत्व–पूर्वत्वस्वरूपाया: प्रत्येकवर्णवृत्तेरप्यानुपूर्व्या: समुदायत्वावच्छेदेनैव वृत्तिस्वीकारादत एव द्वौ रूपवन्तावित्यादिक: प्रत्यय:। तथा चानतिरिक्त– पदादानेऽनुषक्तायं–पदघटितानुपूर्वीविशेषो भवतीति विशिष्टधूमज्ञान– ज्ञाप्यवह्निमत्पर्वतबोधकत्व–प्रयोजकोऽवयवत्वावच्छेदकसमुदायत्वावच्छेदेन विद्यमानश्चेति निगमनेऽति–व्याप्तिवारणायानरितिरिक्तपदम्, तेन च पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहि– शाब्दबोधत्वावच्छिन्नतदित–रविषयकत्वानवच्छिन्ना या कार्यता तन्निरूपककारणताप्रयोजकानुपूर्व्या अवयवत्वप्रयोजक–समुदायत्वावच्छेदेन वृत्तिर्लभ्यतेऽनुषक्तायंपदगर्भानु–पूर्वीप्रयोज्यकार्यता तु पक्षतावच्छेदकादीतर– हेतुज्ञाप्यत्वविषयकत्वावच्छिन्नेति तद्व्युदास इति चेत्– एवं सति किमनुषङ्गगवेषणेन, अयमादि–निगमनान्तभागे हेत्वन्ते च भागे वर्तमानामानुपूर्वीमादाय हेतौ निगमने चातिव्याप्तिवारणायानति–रिक्तपदमित्येव वक्तुमुचितम्। एवमेवाग्रिमग्रन्था अपि न विचारं सहन्त इति तत्र तत्र सूचयिष्याम:। परामर्शहेतुरिति– न्यायावयव इत्यर्थ:। अतएव येनेत्यादौ न्यायावयवत्वमेवानूदितं न त्वबाधितत्वम्– सत्प्रतिपक्षितत्वञ्चापदार्थतया कथं निगमनबोध्यमत आह–तद्बोधौपयिकेति। विशिष्टो व्याप्तपक्षधर्म: सम्बन्धो ज्ञाप्यत्वम्। मिश्रैरन्यथोक्तमन्यथा दूषयितुं निर्दिशति–यत्त्विति–अविषयीकरणात् तद्विषयकवाक्यार्थबोधाजननात्।

ननु तादृशवाक्यार्थबोधोपहितत्वं न विवक्षितं सभाक्षोभादिना वाक्यार्थबुद्धिमजनयन्त्यां प्रतिज्ञायामव्याप्ते:, किन्तु तद्योग्यता, सा च यत्र पृथिव्यामितर–भेदाश्रयत्वबोधतात्पर्यभ्रमस्तत्रत्यफलानुरोधादस्त्येवेत्यत आह–तात्पर्येति। अतिप्रसक्तत्वादिति–धूमादिति हेतावपि पञ्चम्या: पर्वते धूमपदस्य वह्नौ शक्तेस्तत्र प्रतिज्ञासमानाकारवाक्यार्थबोधतात्पर्यस्य च भ्रमेण तादृशबोधजननेन योग्यतावश्यकत्वादिति भाव:। ननु शक्तिभ्रम– नेयार्थ–लक्षणाद्यजन्यस्या–नुमितिसमानाकारवाक्यार्थबोधस्य जननानुकूलाकांक्षैवात्र प्रवेश्यते, न तु तत्तात्पर्यकत्वमपीति तत्रोदाहरणे भवत्येवातिव्याप्तिरित्यत आह–न च तावतेति।

न्यायावयवत्वावच्छेदेन तादृशाकांक्षावत्त्वमवश्यं प्रवेशनीयमितरथान तिरिक्त–पददानेऽपि तत्रोदाहरणैकदेशेऽतिव्याप्तितादवस्थ्यात्। न चोदाहरणत्वावच्छेदेनात्र प्रकृतानुमित्यन्यूनविषयकशाब्दजननानुकूलाकांक्षा विद्यते तन्नेत्यादिभागे तदभावादिति भावः।

अत्रेदं बोध्यम्:– मिश्रास्तावत्सत्यन्तस्य न्यायावयवत्वमर्थ इति न मन्यन्ते, किन्तु न्यायान्तर्गतत्वमात्रमत एव सत्यन्तभागस्य विवरणं विधाय तच्चा–वयवतदवयवसाधारणमतो हेत्वादिव्यावृत्तये विशिनष्टि–**उद्देश्येति**। इति–विशेष्यदलमवतारितमा**लोके**। अतएव च न चावयवान्तस्यानतिरिक्तपदेनैव व्युदासादन्यूनपदमधिकमित्याशंक्यम्। यो यो धूमवान् सोऽग्निमानित्युदाहरणैक–देशेऽग्निमानित्यत्रातिव्याप्तिवारकत्वादिति समाहितमन्यूनपदेन च पक्षतावच्छेकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहिशाब्दजननयोग्यता लभ्यते। सा च सर्वमतेऽप्यानुपूर्वीविशेषस्वरूपाकांक्षा एतावन्मात्रं च न्यायान्तर्गते पृथिव्यामितरभेद–वत्ताबोधकप्रयोजकाकांक्षावति प्रतिज्ञासमानानुपूर्वीके यन्न पृथिवीतरेभ्यो भिद्यते इत्युदाहरणैकदेशेऽपि गतमतोऽनतिरिक्तपदमत **एवालोके** "न च पक्षतावच्छेदकस्या–वयवान्तराप्रतिपाद्यत्वादन्यूनपदमात्रगर्भतयैव सम्यगित्याशङ्क्य यन्न पृथिवीत्युहदारणैकदेशे गतत्वेन तावन्मात्रगर्भस्य दुष्टत्वादिति" समाहितम्। तत्र पक्षतावच्छेदकस्येति तद्विशिष्टसाध्य–वैशिष्ट्यस्येत्यर्थः। उपलक्षणमिदं मतङ्गजो नील इत्यत्र गजो नील इति भागेऽप्यतिव्याप्तिवारणायानतिरिक्तपदं देयमिति ध्येयम्। अनतिरिक्तपदोपादानेन चावयवान्तर्गतत्वं लभ्यते, तथा च न्यायान्तर्गतत्वे अवयवान्तर्गतत्वे च सति शक्तिभ्रमनेयार्थलक्षणाद्यजन्यस्य प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिनः शाब्दस्य प्रयोजकानुपूर्वीमत्त्वं प्रतिज्ञात्वमिति समुदायार्थः। हेत्वन्तभागेऽयमादि–निगमनान्तभागे च या आनुपूर्वी सा पक्षे साध्य–वैशिष्ट्यावगाहिबोधं प्रति न प्रयोजिका, किन्तु धूमज्ञानहेतुक–वह्निज्ञानविषयपर्वत इतिबोधं प्रति वह्न्यादिपदेन वह्निज्ञाननिरूढ़लक्षणा सहकारेणैव तादृशानुपूर्व्या फलोपधायकत्वात् हेतुव्यवकलितप्रतिज्ञानुपूर्वी तु वह्निमत्तां पर्वते बोधयत्यत एव न च प्रतिज्ञायां ज्ञानलक्षणयाऽसंभव इत्याशङ्क्य वह्निमानित्यस्य हेत्वन्वयानुपपत्त्या ज्ञातव्यत्वलक्षणायां हेत्वन्वयप्राक्कालिकमुख्यान्वयबोधमादाय लक्षणसम्भवादित्यालोके समाहिंतमित्यविविच्यालोककृतां मते **दीधितिकृतोक्तं**

दूषणं न श्रद्धेयमिति दिक्।

निविशते—अनुषज्यते। नन्वेवम् पौनरुक्त्यप्रतिसन्धनाभावादबाधितत्वादेवाक्षेपो न स्यादित्यत आह— वाक्यैकवाक्यतयेति। यद्यपि हेतुसहकृत—प्रतिज्ञया शुद्धपर्वतत्वावच्छेदेनोपनय—निगमनैकवाक्यतया धूमवत्पर्वतत्वावच्छेदेन धूमज्ञाप्य वह्निमत्ता प्रतीयते इति न पौनरुक्त्यमन्यथा निराकांक्षतया शाब्दबुद्धेरेव दुर्लभत्वापत्तेः, तथाप्युपनयेन पर्वतत्वावच्छेदेन धूमवत्तायां हेतुसहकृतप्रतिज्ञया पर्वतत्वावच्छेदेन हेतुज्ञाप्यसाध्यवत्तायामुदाहरणेन हेतौ साध्यव्याप्तौ बोधितायां धूमवत्पर्वतत्वावच्छेदेन व्याप्तपक्षधर्महेतुज्ञाप्य—साध्यवत्ताप्यर्थात् प्रत्येतुं शक्यत इति अर्थलभ्यार्थाधानस्वरूपमप्यर्थत्वं मूलाभिप्रेतमित्यभिप्रायः। यत्तु वाक्यैकवाक्यतायां पौनरूक्त्यासम्भवादेव यदि चेत्युक्तमिति गौड़ैरुक्तमयुक्तं तत् एवमपि हेतुसहकृतप्रतिज्ञया शुद्धहेतुज्ञाप्यत्वस्य निगमनेन च व्याप्तपक्षधर्महेतुज्ञाप्यत्वस्य साध्येऽभिधानात्पौनरुक्त्यासम्भवात्पौनरुक्त्यपदेन अतिविततगगनारणिप्रसरणपरिमुक्तमिश्रसानन्द इत्यादि विनाप्यपुष्टार्थत्व— स्यैवाभिधानावश्यकत्वात्। नन्वन्यूनपदेन पक्षे पक्षतावच्छेदकस्य प्रकृतसाध्यस्य च वैशिष्ट्यावगाहिज्ञानं विवक्षितमुत प्रकृतपक्षतावच्छेदकावच्छेदेन प्रकृतसाध्यस्य वैशिष्ट्यावगाहि? आद्ये हेतौ साध्ये इत्यादि, द्वितीये यत्रेत्यादि। गौड़ास्तु यद्यपि वह्निव्याप्य—धूमवानयमित्युपनयः पक्षतावच्छेदकावच्छेदेन न प्रकृतसाध्य— वैशिष्ट्य—बोधकस्तथाप्यधिकरणं वह्निमद्धूमादित्यादि— न्यायोपनयाभिप्रायेणेदम् अधिकरणत्वावच्छेदेन साध्यसिद्धेरूद्देश्यत्वान्न सिद्धसाधनम् इत्याहुस्तत्तुच्छम् नहि व्याप्तिपदेनाधिकरणत्वं धर्मितावच्छेदकीकृत्य साध्यवत्ता प्रतीयते, किन्त्वनवच्छिन्नाधिकरणसाध्यतावच्छेदकसंसर्गेण साध्यमित्यनुपपत्तितादवस्थ्यात्। ननु साध्यस्य हेतुत्वे न्याय एव न भवत्युदाहरणाभावात् स वह्निमानिति वाक्यस्य वह्निमान् वह्निमानित्यन्वयबोधने निराकांक्षत्वात्। यदि च वह्निमन्तमुद्दिश्य वह्निव्याप्तवत्ताविशिष्टो वह्निः, शुद्धसंयोगेन वह्निमति वह्निव्यापकसंयोगेन वह्निर्वा विधातुं शक्यते रूपान्तरेण संसर्गान्तरेण चैकस्याप्युद्देश्यतावच्छेदक—विधेयभावस्वीकारादित्युच्यते, तदापि सिषाधयिषया न्यायप्रयोगानभ्युप—गमादनुपपन्नस्तादृशो न्याय इत्यत आह—यत्र चेत्यादि। एतदिति सम्पातायातम् शुद्धपर्वतत्वेनापि दृष्टान्तोपन्याससम्भवात् दृष्टान्तोपन्यासस्यासार्वत्रिकत्वादाह—

सत्यन्तस्येत्यादि। सत्यन्तस्य न्यायावयवत्वार्थकत्वे हेत्वन्तभागस्य तेनैव वारणसम्भवात् अवयवघटकेत्यादि, मतङ्गजो नील इत्यत्र गजो नील इति वारणायाघटकेति। उदासीनवाक्यवारणाय न्यायान्तर्गतत्वप्रवेश:।

वस्तुतस्तु सत्यन्तस्य न्यायावयवार्थकत्वेऽपि प्रतिज्ञासहकारेण प्रकृतानुमित्य– न्यूनविषयकवाक्यार्थबोधजनके हेत्ववयवेऽतिव्याप्तिवारणार्थमनतिरिक्तपदमावश्यकम् तदुपादाने तु येन रूपेणावयवत्वं तेनैव प्रकृतानुमित्य– न्यूनविषयकबोधजनकत्वं लभ्यत इति नातिप्रसंग इति स्मर्तव्यम्। अनतिरिक्तविषयकत्वं यदि प्रकृतानुमितिविषयतान्यविषयताशून्यत्वं तदा धूमादालोकवान् पर्वतो वह्निमान् धूमादिति हेत्ववयवजन्यो बोध: प्रकृतानु मितिविषयतान्यविषयताक एवेत्यन्यूनपदवैयर्थ्यम्। ज्ञानभेदेन विषयताभेदेन विषयताभेदाभावेऽपि अनुमितिविषयता धूमज्ञाप्यत्ववृत्तिर्विशेषणत्वपरतन्त्रा, हेतुजन्यज्ञानविषयता तु मुख्यतया स्वतन्त्रेति, स्वातन्त्र्य–प्रयुक्तभेदसत्त्वात्। प्रकृतानुमितिर्मुख्यत्वेनापि ज्ञाप्यत्वमवगाहत इति पुनरप्रामाणिकमसंसर्गाग्रहादीनामपि मुख्यविशेष्यता न जन्यतावच्छेदिका, किमुत पक्षता–परामर्शयोरत: प्रकृतानुमितिविषयान्यविषयकत्वमनतिरिक्तविषयकत्वं वक्तव्यम्, तत्राह– **यद्यपीत्यादि**। मिश्रमतमाह–कोट्येति। खण्डश: प्रसिद्ध्या संशयसंभवान्मिश्र– मतमनुपपन्नमितिमत्त्वोपाध्यायमतमुपन्यस्यति– **प्रकृतेति**, सर्वपक्षकोपन– येऽतिप्याप्तेस्तदेव परिष्कुरुते– **प्रकृतेति**। प्रकारता–सामान्यस्य समनियमो विवक्षितो निरवच्छिन्नप्रकारत्वस्य वा। आद्ये सकलाभिधेयवृत्तीति, द्वितीये तन्निष्ठेति। पक्षसाध्ययोर्यावन्तोऽभिधात्वात्यन्ताभावत्व–प्रतियोगित्व– द्रव्यत्वादयो निरवच्छिन्नप्रकारास्तावन्त एवोपनयजन्यबोधेऽपीति तत्रातिव्याप्तिरिति भाव:। अत्र द्रव्यन्तादात्म्येन साध्यमाकाशं च तादात्म्येन हेतुरतो द्रव्यव्याप्याकाशवदित्यु– पनयोत्पन्नबोधे द्रव्यत्वाकाशत्वयोरपि निरवच्छिन्नप्रकारत्वमुपपन्नम्। आकाशत्वस्य विशेष–विशेषरूपस्य निरवच्छिन्नप्रकारासम्भवादत एव पक्षविशेषणे आकाशपदमर्थवत्। यदि चाकाशपदं शब्दाश्रये प्रवर्तते तदा पक्षे नोपादेयमाकाशपदं सकलाभिधेयनिष्ठा– त्यन्ताभावप्रतियोग्यभाववदिदं द्रव्यमाकाशाच्छब्दाद्वेत्यादौ प्रतिज्ञाया अपि अभिधेयपदार्थस्य शब्दगर्भतया प्रतिज्ञोपनययोरनवच्छिन्नप्रकारतयो: समनियमसम्भवाद् गुणादिहेत्वन्तरोपादाने तु गुणत्वादिनिष्ठनिरवच्छिन्न– प्रकारताया

एवानुमितितादृशप्रकारतावैयधिकरण्यं स्यात्। **प्रकृतपक्ष** इत्यादि। अत्र यदि तादृशविषयताविलक्षणविषयताशून्यत्वमनतिरिक्तविषयत्वं तदा वह्निमद्द्रव्यव्याप्यवान् पर्वतो वह्निमान् वह्निमद्द्रव्यादित्यत्र हेत्ववयवेऽतिव्याप्तिवारणाय पक्षे प्रकृतेति। यदि च व्याप्त्यविषयकत्वं तदा पर्वतो वह्निमान् वह्निमद्द्रव्यादित्यादावप्य–तिव्याप्तिवारणाय तत्। अथ यदि व्याप्त्यविषयकत्वमनतिरिक्तविषयकत्वं तदा साध्ये प्रकृतपदस्य फलमाह—**प्रकृतपञ्चम्यर्थेति**। तथा च साध्ये प्रकृतपदोपादाने तदुद्धार इत्याह—न तु **प्रकृतेति**, हेतुत्वं वाच्यत्ववद् वाच्यादित्यादिकस्थलन्याय: सिद्धसाधनादित्याशय:। तादृशविषयता—विलक्षणविषयताशून्यत्वे तु पर्वतो वह्निमत्पर्वतादालोकवद्वृत्तिधर्मवान् वह्निमत्पर्वतादित्यत्र हेत्ववयवेऽतिव्याप्तिवारणमेव प्रकृतपदत्वप्रवेशप्रयोजनमित्यनुसन्धेयम्।

**तादृशेति**— प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यविषयतेत्यर्थ:। तद्विलक्षणत्वं तादृशविषयत्वाव्यापकत्वम्। तथा च तादृशविषयताकबुद्धिवृत्त्यत्यन्ता–भावप्रतियोगि—विषयताशून्यत्वमनतिरिक्तविषयकत्वं वाच्यमिति भाव:। ननु प्रतिज्ञाजन्य—शाब्दबोधविषयताव्यक्तिस्तादृशबोधान्तरनिष्ठात्यन्ताभावप्रतियोगिनी–त्यसम्भवो ज्ञानभेदेन विषयताभेदात् तदभावेऽपि विषयभेदात् तद्भेदावश्यकत्वेन वह्नित्वेन पर्वतवह्निवृत्ते: विषयताव्यक्तेर्वह्नित्वेन महानसवह्निमात्रावगाहितादृशबोध–निष्ठात्यन्ताभावप्रतियोगित्वात्कस्या अपि विषयाताया व्यापकत्वाभावादसम्भव:, वह्नित्वेन यावद्वह्निवृत्तिरेका विषयता पुनरप्रामाणिकी। नच साध्यतावच्छेद–कावच्छिन्नप्रकारतानिरूपित—पक्षतावच्छेदकावच्छिन्न—विशेष्यता यावन्त्यस्ता–वद्विषयताविशिष्टशाब्दत्वाव्यापकविषयताशून्यत्वमनतिरिक्तविषय— कत्वमिति वाच्यम्, एवं सत्यपि धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यत्र हेत्ववयवेऽतिव्याप्त्यसम्भवेनान्यूनपदवैयर्थ्यप्रसंगात्, हेत्ववयवजन्यवाक्यार्थबोधस्य धूमज्ञाप्यत्वनिष्ठविषयताया मुख्यविशेष्यतात्वेन तादृशशाब्दबुद्धित्वा–व्यापकतयानतिरिक्तपदेनैव तद्वारणात्।

न च मुख्यविशेष्यता नातिरिक्ता, किन्तु धूमादालोकवान् धूमादित्यु–भयबोधसाधारण्येकैव। सा च धूमादालोक इत्यत्रालोकविशेषणत्वेन तज्ज्ञानीयेनावच्छिन्ना धूमादित्यत्र तु तदनवच्छिन्नेतिविशेष इति वाच्यम्, एवं सति धूमादालोक इति ज्ञाप्यत्वीय आलोको धूमीयं ज्ञाप्यत्वमिति च

ज्ञानयोरवैलक्षण्यप्रसंगात्। परतन्त्रस्वतन्त्रविशेष्यतयोर्भेदावश्यकत्वादित्यतः पक्षान्तरमाह— **प्रकृतहेतुकेति**। अन्वयव्यतिरेक—भेदादन्योऽन्यात्यन्ताभावभेदाच्च भिन्नानां व्याप्तीनामनुगमनार्थमौपयिकान्तं यादृशविषयताकज्ञानत्वेन तल्लिंगकतत्साध्यकानुमितिकारणत्वं तादृशविषयताशून्यत्वे तात्पर्यम्। तल्लिंगकेत्यस्य फलमाह— **वह्नीति**। तादृशालोकवत्पर्वते संशयस्य विप्रतिपत्तेरप्ययोगात् न्याय एव न युज्यत इत्यत आलोकस्य व्याप्यत्वे पक्षधर्मत्वे च गृहीते हेत्वन्तराकांक्षानुदयाद्वा सधर्मेति। प्रकृतसाध्यकेत्यस्य फलमाह—**इन्धनेत्यादि**। व्याप्यविषयकत्वस्यानतिरिक्तविषयकत्वपदार्थत्वे उदासीनवाक्यवारणाय न्यायावयवत्वमेव प्रवेशनीयं, न त्ववयवाघटकन्यायान्तर्गतत्वं, तथा सति हेत्वन्तभागेऽतिप्रसंगात्। अनतिरिक्तपदं तु पर्वतत्वावच्छेदेन वह्नेः साध्यतायां पर्वतदृष्टान्तवत्युदाहरणेऽतिव्याप्तेर्वारणाय। न च यत्र पर्वतत्वावच्छेदेन साध्यासिद्धेरुद्देश्यतायां वह्निमत्पर्वतादिस्तादात्म्येन हेतुस्तत्र वह्निमत्पर्वतादिति हेतावतिव्याप्तिः, पर्वतत्वसामानाधिकरण्येन वह्निसिद्धिं विना वह्निमत्पर्वतस्यापि तदवच्छेदेन परामर्शासम्भवादेतादृशन्यायस्य सिद्धसाधननियमेनानभ्युपगमात्। यदि च तादृश एव साध्ये वह्निमत्पर्वतसंयोगादिति हेतावतिव्याप्तिरित्याशंक्यते, तदा मुख्यविशेष्ये पक्षे साध्यवैशिष्ट्यावगाहित्वमन्यूनविषयकत्वं प्रवेश्यमनन्यगतिकत्वात्। **आकांक्षाविरहेणेति**, आकांक्षा प्रामाणिकानां समयबन्धः, प्रतीतायां व्याप्तौ पुनर्नाभिधातव्यमित्येवंस्वरूपः। विरहेण विरोधेन, उदाहरणेत्युपलक्षणम्, इदमा परामृष्टे वह्निव्याप्यधूमवत्पर्वते तादृशधूमानन्वयादुपनयासम्भवोऽपि द्रष्टव्यः।

ननु प्रतिज्ञा प्रविष्टव्याप्तिभिन्ना व्याप्त्युदाहरणोपनयाभ्यां प्रतिपादनीयेति न समयभङ्गो निराकांक्षत्वस्येत्यत आह— अन्यथेति, अतिप्रसंगात्— हेतुद्वयोपादानप्रसंगात्। तथा च तत्साध्यगमकैकस्मिन्नपि हेतावभिहिते हेत्वन्तरं नोपादेयमिति समयः। तथा तत्र हेतौ साध्यगमकतौपयिक्यां कस्यामपि व्याप्तावभिहितायां न व्याप्त्यन्तरोपादानमित्यपीत्यतो निरुक्तन्याय एवासम्भवी, कुत्र प्रतिज्ञायामतिव्याप्तिरिति भावः। उभयव्याप्त्युपन्यासोऽपीत्यत्र भिन्नाभ्यां वाक्याभ्यामिति शेषस्तेनोभयव्याप्तिबोधकमेकमुदाहरणमभिधास्यमानं नानुपपन्नं भवतीति ध्येयम्। नन्वयं गौरितिप्रतिज्ञायामिदन्त्वविशिष्टे साध्यस्य गोत्वस्यानवगाहनात् कथमनुमितिसमानविषयकज्ञानप्रयोजकत्वमतो गोत्वस्य

साध्यत्वाभावं व्यवस्थापयति गोत्वत्वाद्येति। साध्यतानुमिति विधेयता, सा च किञ्चिद्धर्मावच्छिन्नेति नियम इति हृदयम्। नन्वनवच्छिन्न—गोत्वविधायिकाप्यनुमितिः सम्भवत्येव सास्नासमानाधिकरणान्योऽन्याभावप्रतियोगितानवच्छेदकगोत्ववद् गोवृत्तिसास्नावदिदमिति परामर्शस्य तादृशानुमितौ कारणत्वसम्भवादतस्तादृश—गोत्वसाध्यकन्यायासम्भवमाह— पदार्थतेति, जातावित्यनेनान्वयितावच्छेदक—रूपानुपस्थितिरभिहिता। तेन घटादन्य इत्यत्र पदार्थतावच्छेदकेऽन्यत्वे पञ्चम्यर्थान्वयेऽपि न क्षतिः, किञ्चिद्धर्मावलीढ एव पदार्थान्तरान्वय इत्यभिमानः। अयं गौरिति प्रतिज्ञया केवलया पक्षे गवाभेद एव प्रत्याय्यते। हेतुसंकलितया तु गोपदस्य गोत्वविधेयकज्ञानविषयो लक्षणावशात्सास्नाज्ञानजन्यगोत्वविधेयक—ज्ञानविषयोऽयमित्यन्वयबोधो जन्यत इति न न्यायानुपपत्तिरिति ध्येयम्, तथैव वह्नेरपि साध्यत्वे वह्निमतः, अन्यथा वह्निमद्व्याप्यवानित्युपनयः स्यादिति भावः। ननु वह्निसाध्यकप्रतिज्ञालक्षणे वह्निमदभेदावगाहित्वस्वरूपमन्यूनविषयकत्वं प्रवेश्यम्, न च वह्निसाध्यकप्रतिज्ञायामतिव्याप्तिः, प्रकृतन्यायान्तर्गतत्वदलेनैव तद्वारणाद् इत्यत आह—एवमिति, आदिपदेनान्यपद— नञ्—पदयोरुपग्रहः, सूक्ष्ममित्यनेन विमर्शक्षमत्वं सूचितम्। तथाहि—साध्यविधेयतानिरूपितपक्षोद्देश्यता—कत्वमेवात्रान्यूनविषयकत्वम्। अयं गौः पर्वतो वह्निमान्, चैत्रः पक्ता, पृथिवीतरभिन्नेत्यादौ शुद्धगोत्वे वह्नौ पाककृतावितरभेदे च विधेयता पर्याप्य वर्तते, न तु प्रकारीभूतेऽपि गोवह्निमदादौ, अन्या खलु प्रकार· . अन्यैव च विधेयता नहि शब्देन पदान्तरलभ्यो धर्मी विधीयते, किन्तु धर्ममात्रमत एव विशेष्यविशेषणभावेनान्वयाभावेऽपि स्वर्गकामो यजेतेत्यादौ स्वर्गमुद्दिश्य यागकरणिका भावना विधीयत इति भाट्टा व्यपदिशन्ति। यत्र चानुकूलत्वेन पाकः कृतौ प्रतियोगितया, इतराणि समवायेन, गुणो वानुमितौ विधेयतावच्छेदकस्तत्र पाककृतिमान् इतराभिन्नो गुणवान् इत्यादौ प्रतिज्ञाजन्यवाक्यार्थबाधेऽपि तथा पाकपदस्य पाकानुकूले इतरपदस्येतरप्रतियोगिके गुणपदस्य गुणसमवायिनि वृत्तिमत्त्वेन तत्तत्पदार्थस्य विधेयविशेषणत्वेनान्वयेऽपि विधेयतावच्छेदकस्वाभाव्यात् तद्विशेषणस्यापि तन्निष्ठविधेयतावच्छेदकत्वोपगमात्। अतएव सोमेन यजेतेत्यादौ सोमपदं मत्वर्थलक्षणायामपि सोमविशिष्टे यागे भावनामुद्दिश्य करणतया विधीयत इति तौतातिकाः।

नन्वेवमपि पर्वतो वह्निमानिति प्रतिज्ञाजन्यवाक्यार्थ– बोधस्यानुमित्य–विषयमतुबर्थविषयतादात्म्यादि– विषयकत्वमनतिरिक्त–विषयकत्वं दुर्घटमिति चेन्न, अन्यूनपदेन प्रकृतानुमिति–विधेयत्वस्यानतिरिक्तपदेन तद्भिन्नविधेयताशून्यत्वस्य विवक्षितत्वात्। साध्यतावच्छेदकेतरधर्मानवच्छिन्नविधेयतानिरूपितपक्षतावच्छेद–कावच्छिन्नोद्देश्यताशालिवाक्यार्थबोधजनकोऽवयवाघटकत्वे सति न्यायान्तर्गत इति तदर्थ:, हेत्वन्तभागेनायमादिनिगमनान्तभागेन च जनितस्य वाक्यार्थबोधस्य विधेयता–साध्यतावच्छेदकेतरेण धूमज्ञाप्यत्वादिनैवावच्छिन्नेति न तयोरतिव्याप्ति:।

ननु तथापि घटो जातिमानिति प्रतिज्ञालक्षणे घटो द्रव्यमित्यत्रातिव्याप्तिस्तत्र द्रव्यत्वनिष्ठाविधेयताया: केनापि धर्मेणानवच्छिन्नत्वात्पक्षसाध्यभेदेन प्रतिज्ञा–लक्षणभेदावश्यकत्वे घटे जातिसाध्यक–प्रतिज्ञालक्षणे केवलं न्यायान्तर्गत–त्वस्यैवोपादेयत्वात्, न्याये प्रकृतत्वोपादाने प्रयोजनविरहात् साध्यतावच्छेदका–वच्छिन्नत्वस्यापि विधेयताविशेषणत्वे इदं द्रव्यमिति निरवच्छिन्नविधेयता–कप्रतिज्ञायामव्याप्तिरिति चेत्, विधेयोद्देश्यभेदेन प्रतिलक्षणभेदावश्यकत्वे निरच्छन्नद्रव्यत्वादिसाध्यक–प्रतिज्ञायास्तथाविध– विषयताक–वाक्यार्थ–बोधजनकवाक्यत्वेन निर्वचनसम्भवात्। अनुमितिविषयत्वं धूमज्ञानजन्यज्ञानीयं धूमादिति हेत्ववयवेऽप्यतिव्याप्तिवारणाय प्रकृति–पक्षतावच्छेदकावच्छिन्नत्वमुद्देश्यता, विशेषणहेतुजन्यवाक्यार्थबुद्धेरुद्देश्यता तु नानुमितिविषयतात्वेनावच्छिन्ना, किन्तु शुद्धविषयतात्वेन। यदि चैकपदार्थयोर्ज्ञानविषयत्वयोर्वा उद्देश्यविधेयभावेनान्वयस्तदा प्राचीनमते जनकतामात्रस्य पञ्चम्यर्थतया घटजनकता धूमज्ञानीया धूमादित्यत्र हेत्ववयवेऽतिव्याप्तेर्वारणादुद्देश्यताविशेषप्रवेश:, यदि च प्रकृतिप्रत्यायार्थयोरपि नोद्देश्यविधेयभावेनान्वयस्तदा नोपादेयमेव तदिति दिक्।

तदा यादृशेत्यादि–यादृशसध्यिका तावति कृतेऽनुमितिविषयत्वं धूमज्ञानजन्यज्ञानीयं धूमादित्यत्र हेत्ववयवेऽतिव्याप्ति:, विषयत्वपक्षक–तत्साध्यक–प्रतिज्ञातुल्यविषयकत्वादतो यादृशपक्षिका इति। तावन्मात्रे कृते पर्वतो वह्निव्याप्य धूमवानिति प्रतिज्ञासमानविषयके पर्वतपक्षक–वह्निसाध्यकोपनये तथाविधप्रतिज्ञा–लक्षणातिव्यातिरतो यादृशसाध्यिकेति। पक्षे–यद्धर्मविशिष्टे तेन संयोगेन वह्ने: पक्षतावच्छेदकत्वे वह्निमत्पर्वतो द्रव्यमित्यादिप्रतिज्ञोपग्रह:, भ्रमनेयार्थलक्षणादिना, वह्निमानिति प्रतिज्ञापि धूमीयं हेतुत्वमितिबोधजनिका भवतीति हेत्ववयवेऽति–

व्याप्तिवारणाय सम्प्रदायसिद्धा इति हेत्वन्तभागेऽयमादिनिगमनान्ते चातिव्याप्तिवारणाय निवर्त्तकान्तम्, फलतोऽनतिरिक्तविषयकत्वस्वरूपनिर्वचनम् सत्यन्तभागस्या–वयवाघटकन्यायान्तर्गतत्वपरतायामिदमुपादेयम्, न्यायावयवत्वपरत्वे तु नोपादेयमेव। अत्र कल्पे सिषाधयिषया न्यायप्रयोगो नाभ्युपेयत इतरथा हेतुत्वं धूमीयं, न वा वह्निज्ञाप्यो न वेत्यादिकः संशय इति तद्बोधानिवर्त्तनीय– संशयनिवर्त्तकेतरस्य तावदन्यतमबोधस्य जनकत्वं हेत्वन्तभागेऽतिव्याप्तं, यदि च प्रतिज्ञासम्प्रदाया–वच्छेदिकानुपूर्वीज्ञानत्वेन यादृशयादृशविषयताक– शाब्दत्वावच्छिन्नंप्रति–बन्धकतानिरूपितप्रतिबध्यतानधिकरणसंशयाप्रतिबन्धकत्वं प्रवेश्यते तदा संशयपदवैयर्थ्यम्, तावदन्यतमबोधानिवर्त्तनीया निवर्त्तकत्वमात्रस्येव सम्यक्त्वात्, तथापि तादृशनिश्चयत्वविशिष्ट–सामान्याप्रतिबध्यस्य समानविषयकशाब्दस्य शाब्दसामान्यं न शाब्दसामान्य–प्रतिबन्धकम्, किन्तु बुभुत्साविरहविशिष्टमेव, तथा च सति तादृशनिश्चय–सामान्या प्रतिबध्यशाब्दनिवर्त्तकबोधजनकत्वात् प्रतिज्ञायामव्याप्तिवारणाय तदिति वाच्यम्। यत्र चान्तरेणेत्याद्यग्रिमग्रन्थेन विवक्षितस्य तादृश–निश्चयाप्रतिबध्य– शाब्दबोधानिवर्त्तकशाब्दस्वरूपयोग्यत्वस्य तत्रापि सत्त्वेनाव्याप्ति–विरहादिति केचित्, तदसत्, स्वरूपयोग्यतापन्नस्यातिप्रसक्तत्वात्, प्रतिज्ञायामव्याप्तिवारणार्थं तस्यावश्यकत्वात्, सर्वथा शाब्दानुपार्जकप्रतिज्ञायां योग्यताया अप्यादरणीयत्वात्, सर्वत्र तु न तथा। तथा सति तयैव निर्वाह उपधानस्य क्वापि निवेशप्रसंगात् साध्यादिभेदेन प्रतिज्ञालक्षणस्य भिन्नत्वात् धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यत्र हेत्ववयवेऽतिव्याप्तिवारणाय तावदन्यतम इति, फलतोऽन्यूनविषयकत्वनिर्वचनम्। तत्र साध्यसाधनादिभेदेन प्रतिज्ञालक्षण–भेदात्क्वचित् साधन एकविधः, क्वचिदन्यतरः क्वचिदन्यतमो निवेशनीय इत्याह–एवञ्चेति। इदंपक्षक–गोसाध्यकप्रतिज्ञालक्षणे निरुक्तबोधनिवर्तनीय–संशया निवर्तक–बोधजनकन्यायावयवत्वमात्रं प्रवेश्यम् इतरस्यान्यूनविषयक–त्वभागस्य व्यर्थत्वात् दैवादेकत्वादिसंख्यामप्यनवगाहमानस्येदं– पदार्थे केवलगोतादात्म्यावगहिबोधस्य जननयोग्यतामादाय सर्वत्र लक्षणसंगम इति ध्येयम्। संयोगेन समवायेन वेत्युपलक्षणम् दैशिकादिवृत्तिनियामकसम्बन्धमात्रस्य। अन्यतरत्वेन प्रवेशस्थलमुदाहरति– समवायेनेत्यादि – पाककृतिमत्त्वं, चैत्रः पचतीत्यत्र कर्त्रभेदः, चैत्रः पाचक इत्येव, तथा च तथाविधान्यतरबोधानिवर्त्य–

संशयानिवर्त्तकबोधजनकन्यायावयवत्वं तथाविधप्रतिज्ञालक्षणमिति भाव:।

अन्यतमत्वेन बोधानां प्रवेशस्थलमुदाहरति—**विशेषणतयेति**— पृथिवीतरेभ्यो भिद्यते, इतरान्या अन्यतरा वा नेतराणि इतरभिन्नेति, चत्वारि प्रतिज्ञाशरीराणि अन्यपदमन्योऽन्याभावस्वरूपेण भिन्नपदम्, तदाश्रयत्वेन धर्मिणं बोधयतीति भेद:। अत्र तावदन्यतमबोधनिवर्त्तनीय—संशयानिवर्त्तक—बोधजनक—न्यायावयवत्व—मुक्तपृथिवी—पक्षकेतरभेदसाध्यक—प्रतिज्ञालक्षणम् तावतामन्यतम इति तु न प्रवेशनीयं प्रयोजनविरहात्, प्रवेशनीयं तु पृथिवीत्वाद्गन्धवती पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वादित्यत्र तादृशपृथिवीपक्षक—प्रतिज्ञालक्षणे हेत्ववयवेऽतिव्याप्ति—वारणायेति ध्येयम्। कस्यचिन्मतमुपन्यस्यति— **तावदिति**। तत्पक्षकसाध्यिका: प्रतिज्ञा यादृशयादृशबोधजनकसम्प्रदायसिद्धास्तावदन्यतमेत्यर्थ:। इदन्तु पूर्ववद्धेत्वन्तभागातिव्याप्तिवारणायानतिरिक्तविषयकपदार्थविवरणम्, संशय—पदोपादानप्रयोजनं पूर्ववत्, धूमादालोकवान् पर्वतो वाह्निमान् धूमादित्यत्र हेत्ववयवेऽतिव्याप्तिवारणाय संशयनिवर्त्तकान्तम्। निरुक्तहेत्वयवजबोधस्तु तावदन्यतमबोधनिवर्त्त्य यावत्संशयान्तर्गतस्य तादृशपर्वतो वाह्निमान्नवेति संशयस्यैवानिवर्त्तक इति तद्व्युदास:। पृथिवी नेतराणीत्येवमाकारक—तादृशान्यतमबोध—निवर्तनीयसमानविषयकानुमितिनिवर्तकत्वम्, पृथिवीतरेभ्यो भिद्यत इति प्रतिज्ञाजन्यबोधस्य नास्तीति तत्राव्याप्तिवारणाय संशयेति। अत्र पृथिवी इतरभिन्नेति बोधस्य तावदन्यतमान्तर्गतस्य निवर्त्य:, पृथिवी आश्रयो न वेति संशयस्तेन बोधेन क्तप्रत्ययार्थस्याश्रयस्य पृथिव्यान्तादात्म्येनावागाहनात् तन्निवर्त्तकत्वं, पृथिवी नेतराणीत्यन्वयबोधस्य न सम्भवति, समानविषयकत्वेन प्रतिबन्धकतावादेऽपि प्रतीत्यविषयीभूताश्रय— तादात्म्यसन्देहे तस्याविरोधि—त्वादित्यस्वरस:। चैत्र: पचति घटो नेतराणीत्यादावुपनयासम्भवात् प्रतिज्ञापि न सम्भवतीत्याशंक्याह—**चैत्र इत्यादि**। अत्रेदं चिन्त्यम्, पाचकत्वव्याप्यवान् अनितरत्वव्याप्यवानित्यादिको नव्यानामपि सुवच एवोपनय:, एतादृशस्थले कृत्तद्धिसमासेभ्य: सम्बन्धाभिधानं भावप्रत्येनेत्यनुशासनेनैकपदार्थसंसृष्टद्वितीय—पदार्थतावच्छेदकस्यैव त्वप्रत्ययेना— भिधानात्। ननु पाचकत्वमित्यादावनुकूलता—संसर्गेण पाकविशिष्टस्य प्रयत्नस्य भावप्रत्ययेनाभिधानेऽपि तस्य प्रकृत्यर्थ—विशिष्टस्येव व्याप्यत्वेनान्वयो न तु केवलस्येति पाचकवृत्तिपाककृतिव्यांप्यत्वं

लभ्यते, न तु केवलपाककृतिव्याप्यत्वमिति चेत्, किञ्चातः तर्हि वह्नौ साध्ये प्रमेयवह्निव्याप्यवानित्युपनयोऽपि प्रसज्येतेति चेत्, न, तत्र प्रमेयपदं विनापि वह्निपदप्रयोगसम्भवेनाधिकप्रयोगेण निग्रहात्, इह तु पाचकपदप्रयोगं विना प्रत्ययप्रयोगासम्भवाद्विशेषोपस्थापकत्वाच्चाधिक्याभावात्। परे तु, पाककृति–व्याप्यवानित्याकारकत्वोपनयः कृत्यन्योन्याभावपदयोर्व्याप्यान्वयानुरोधेन लक्षणावश्यकत्वेऽनुकूलत्व– प्रतियोगित्वादिसंसर्गेण पाकेतरादिविशिष्ट–कृत्यन्योऽन्याभावसम्बन्धिनि लक्षणा, पूर्वपदं तात्पर्यग्राहकमिति सर्वसामञ्जस्यादिति प्राहुः। बह्न्यादिसाध्यको न्याय एव नास्ति कुतः प्रतिज्ञा, पर्वतस्तथेत्यादिका तु न प्रतिज्ञा, विप्रतिप्रत्त्युपस्थिते कोटिद्वये सर्वनाम्ना साध्यनिर्देशस्यापरिच्छेद–कत्वादित्याशयवतो यथाश्रुतमूलमुपपादयतो मतमुपन्यस्यति– **केचित्त्वित्यादि**। विप्रतिप्रत्तिकोटितामात्रं न जिज्ञासा–निमित्तमित्यतस्तदधीनसंशये चेति। तथा च विप्रतिपत्त्या धर्मिणः कोट्योश्च वह्निमदन्योऽन्याभावयोरुपस्थितिरथ मानसः संशयस्ततो दुःखमथ दुखानुव्यववसायस्ततो दुःखे द्वेषोऽथ दुःखसाधनतया वह्निमत्तदन्योऽन्या–भावान्यतरनिश्चयाभावस्य प्रतिसन्धानमथ तत्र द्वेषस्ततो द्वेषयोनिस्तदन्यतरनिश्चय इच्छा भवतीति भवति वह्निमान् जिज्ञासित इति भावः।

अत्र संशय एव विप्रतिपत्त्युपस्थितिवह्निकोटिकोवह्निमत्कोटिक–सन्देहसाधनत्वेन वह्निनिश्चयाभावे द्वेषस्तत्र निश्चयेच्छा च सम्भवतीति वह्नेरपि जिज्ञासितत्वात्तत्साधनेनार्थान्तरमित्यलं बहुतन्त्रविप्लवेनेत्यस्वरसः। योग्यता–पदमापाततः अयोग्येऽपि न्यायस्वीकारादत एव न्यायाख्यकथारम्भ इत्युपपद्यत इति स्मर्त्तव्यम्। तथाचे त्यादि उद्देश्यानुमित्यन्यूनातिरिक्त– विषयकेत्यत्रान्यूनान–तिरिक्तपदपरिहारे उद्देश्यानुमिति विषयकेत्यवशिष्टं तत्र च सप्तम्युपमानोत्तरपदलो–पादुद्देश्यानुमितौ विषय इव विषयो यस्येति विग्रहलाभादनुमितिसमानविषयकत्वं पर्यवसन्नमिति भावः। अत्र सत्यन्तभागस्यावयवाघटकन्यायान्तर्गतत्वं नार्थस्तथा सति चैत्रो विकृतोऽक्ष्णा काणत्वादित्यत्र चैत्रो विकृतोऽक्ष्णेत्यन्तभागेऽतिव्याप्तिप्रसंगादत एवात्र न्यायावयवत्वं सत्यन्तेन व्याख्यातमपि पुनरनूदितं पक्ष–विशेष्यकत्वविवक्षया फलं प्रदर्शयितुं पक्षविषयकमुदाहरणं दर्शयति–**यथेति**। दृष्टान्तवदुदाहरणस्य वारणायेत्यन्वयः, यो यो धूमवान् स वह्निमान् यथा ह्रदभिन्नमित्यादेर्निर्वह्नित्व–हेत्वग्राहकस्येति शेषः। दृष्टान्त– 'प्रयोगस्यासार्वत्रिकत्वात् स्थलान्तरमाह–

हृदावृत्तीत्यादि। हृदो निर्धूमो हृदावृत्तिधर्मशून्यत्वादित्यत्र यो यो धूमवान् स हृदावृत्तिधर्मवान् इत्युदाहरणजन्यप्रतीतेर्लिङ्गाविषयकत्वात् पक्षविषयकत्वाच्च, तद्वारणाय पक्षमुख्यविशेष्यकत्वं समानविषयकान्तार्थो वाच्य इत्यर्थ:। केवलान्वयिनि व्यातिरेकिणा प्रयोगो नास्तीत्यभिमानेनेदमन्यथा वृक्ष: कपिविभागाभाववान् कपिसंयोगाभावादित्यादौ यो य: कपिविभागवान् स कपिसंयोगवानित्यु– दाहरणेऽतिव्याप्तिरिति ध्येयम्।

निगमनं पक्षतावच्छेदकावच्छिन्नविशेष्यकत्वविवक्षयापि व्यावर्तयितुं शक्यत इत्युपनयपर्यन्तानुधावनम्। इदमुपलक्षणं, हेतुत्वं प्रमेयं ज्ञेयत्वादित्यत्र हेत्ववयवेऽति– व्याप्तिवारणमपि लिङ्गाविषयकत्वोपादानप्रयोजनमवसेयम्। प्रकृतपदं यदि लिंगतावच्छेदक–विशिष्टार्थकं तथा सति **आह–गन्धवती तथेत्यादि उपनयासम्भव इति**। तथा च प्रकृतन्याय एव नास्ति कुत्र प्रतिज्ञायामव्याप्तिरिति भाव:।

**साध्याभावेति**, तथा चेतरत्वव्यापक–गन्धाभावाभाववती चेयमित्येवोपन– यशरीरमिति भाव:। प्राचामिति व्याप्तेरुदाहरणेन लाभात् पक्षधर्मतामात्रमुपनयेन प्रतिपाद्यत इति प्राचामभिसन्धि:। **पक्षाविशेषणान्वयेत्यादि**, यद्यपि गन्धवती भिद्यते गन्धादित्यत्र पक्षविशेषणताभिन्नेपि गन्धे विशेष्यता भिद्यत एव, न च गवाश्वयोरिव प्रकारत्वविशेष्यत्वयोरैक्यसम्भव:। यत्तु पक्षविशेषणता– भिन्ना या हेतुतावच्छेदकावच्छिन्नविषयता तच्छून्यत्वमर्थ:, गन्धवत्पक्षके च विशेषणतैव गन्धत्वावच्छिन्ना न तु विशेष्यतेति तन्न, सुरभि गन्धवती तथा गन्धादित्यत्र सौरभत्वप्रकारतानिरूपितविशेष्यताया गन्धत्वावच्छिन्नत्वात् सुरभित्व– गन्धत्वोभयावच्छिन्नविशेषणतान्यत्वाच्चाव्याप्तितादवस्थ्यात्, तथापि विशिष्टवैशिष्ट्यबोधे मुख्यविशेषणांशे प्रकारत्व–विशेष्यत्वयोरभेद एवेत्यभिमानेनेदमेवं साध्याविशेषणत्वमपि निर्वाच्यम्, दधि द्रव्यं दध्नो दधिद्व्यणुकमात्रग्राहिकापि प्रतिज्ञा सम्भवतीति। न च द्व्यणुकं हेतुर्दध्नि पक्षे समवेतत्वाभावादत आह– **प्रमेयत्वमभिधेयमिति**। अत्र घटादिवृत्तिप्रमाविषयकत्वमेव प्रमेयत्ववृत्तिप्रमाविषयकत्वं, न त्वतिरिक्तविषयत्वे विषयत्वान्तरस्वीकारेऽनवस्थानादित्यभिप्रायेणेदमितरथा त्वाह– **गोत्वाभाव इति**। उपनयस्येति उपनये व्याप्तिर्न निविशत इति प्राचां मतेन साध्याभाववद्वृत्तित्वमेव व्याप्तिरित्यभिप्रायेण, साक्षात्परम्परासाधारण– पक्षविशेषणताप्रवेशाभिप्रायेण वा, उपनयातिव्याप्तेरभिधानमन्यथा व्यापकता–

विशेषणतया साधनस्योपनयेन बोधनात्साधनव्यापकसाध्यसमानाधिकरण–साधनवानयमित्येवंविधे तस्मिन्नतिव्याप्त्यनवकाशात्। **तथापीत्यादि**– गन्धवती भिद्यते गन्धादित्यत्र प्रतिज्ञासंग्रहाय पक्षतावच्छेदकविशिष्ट इति, पर्वतो वह्निसामग्रीमान् वह्नेरित्यत्र तत्संग्रहाय साध्यतावच्छेदकविशिष्टेति।

नन्वत्र को बहिर्भावपदार्थः न तावद्भेदस्तादृश– वैशिष्ट्यविषयताभिन्नलिंग–विषयतासत्त्वेन गन्धवती भिद्यते इत्यत्रैवाव्याप्तिवादवस्थ्यात्, नाप्यव्यापकत्वं विषयताया ज्ञानभेदेन विषय–भेदेन वा भिन्नतया सर्वस्या एव विषयतायास्ता–दृशवैशिष्ट्यविषयत्वाव्यापकत्वादित्यतः पक्षान्तरमाह– वस्तुत इति, यद्वा यथाश्रुते गन्धवती भिद्यत इत्यत्र पक्षसाध्यवैशिष्ट्यं न विषयः, किन्तु साध्याश्रयत्ववैशिष्ट्यमिति तद्विषयताबहिर्भूतमेव लिंगविषयत्वमित्यव्याप्ति– तादवस्थ्यम्। अथ यादृश–यादृशविषयताकबोधजनकत्वेन प्रतिज्ञाः सम्प्रदायसिद्धास्तद्विषयता बहिर्भूतलिंगविषयत्वाभावो वाच्यस्तदा लिंगपदार्थवैयर्थ्यम्, अनतिरिक्तविषयत्वे पूर्वोक्ते पर्यवसानञ्चेत्यतः पक्षान्तरमाह–वस्तुत इति। लिंगत्वं लिंगं वा प्रमेयमित्यादावव्याप्तेराह–**तथा चेत्यादि**। हेतुभूतेत्यादि ह्रदो धूमाभाववान् वह्न्यभावादित्यत्र यो यो धूमवान् स वह्निमानिति यो यो धूमाभावाभाववान् स वह्न्यभावाभाववानिति यो यो धूमवान् स वह्यभावाभाववानिति त्रिविधोदाहरणव्यावृत्तये लिंगविशेषणनिर्देशः। तथा च हेतुभूतो वह्न्यभावस्तत्प्रतियोगितावच्छेदकं वह्नित्वं वह्न्यभावाभावत्वं चेति तदवच्छेदेन साध्याभावव्यापकतावगाहिनां त्रयाणामुपग्रहः साध्याभावोऽपि साध्यभूताभावप्रतियोगित्वेनैवोपादातुमुचित इति ध्येयम्। यादृशव्याप्तिविषयताकत्वेन प्रकृतानुमितिकारणत्वं तादृशं–विषयताशून्यत्वं तु निर्गलितार्थः। एवं सति पक्षविशेष्यकार्थकमुद्देश्यानुमितिसमानविषयकत्वं नोपादेयमित्याशयेन मूलं योजयति–अन्यूनेत्यादि। पक्षविशेष्यकत्वाप्रवेशे धूमादित्यत्र हेत्ववयवेऽतिव्याप्तिं परिहारयितुमुपक्रमते– हेतुत्वमित्यादि। पञ्चम्यन्तान्यत्वं पटो न दण्डादितिप्रतिज्ञायामव्यापकमतो हेत्वन्यत्वस्य वेति। **आवश्यकत्वादिति**। तथा च हेत्वन्यत्वेनैव सकलहेतुवारणे पक्षविशेष्यकत्वं नोपादेयमिति भावः। ननु हेत्वन्यत्वोपादानावश्यकत्वे हेतुत्वमभिधेयं प्रमेयत्वादित्यत्र हेत्ववयवस्य तत्र हि पञ्चम्यर्थहेतुत्वस्य प्रकृत्यर्थविशेषणत्वेनान्वयात् पक्षविशेष्यकत्वेन तद्वारणासम्भवादित्यतः सुबर्थस्य संख्येत्यादि विशेषणत्वेनान्वये बाधकमाह–

**प्रतिपादकेति**। तथा च पर्वतो वह्निमान् धूमात्, पृथिवी भिद्यते गन्धादित्यादौ हेतुताविशिष्टस्य हेतोर्वह्नौ भेदेनान्वयोऽनुपपन्न इति भाव:।

ननु विभक्त्यर्थसंसर्गेण प्रातिपदिकार्थयो: क्रिया–प्रातिपदिकार्थयोश्चान्वय–बोधो भवन्नातिप्रसज्यत इत्यत आह–चैत्रस्येदमित्यादि, न मैत्रस्येत्यर्थ:, षष्ठ्यर्थसम्बन्धावच्छिन्नप्रतियोगिताको मैत्राभावो न प्रतीयते, षष्ठ्यर्थस्वस्वामिभावस्य वृत्त्यनियामकसंसर्गस्य प्रतियोगितानवच्छेदकत्वात्, संयोगादिना मैत्राभावस्तु मैत्रधनेऽप्यतिप्रसक्तमिति भाव:। ननु न चैत्रस्येत्यत्रान्य एव नञर्थ:, स्वस्वामिभावेन धनेऽन्वेतीत्याह–**द्वयोरिदमिति**। तथा च चैत्रमैत्रयोर्धने न चैत्रस्येति प्रयोगप्रसंग इति भाव:। बाधकान्तरमप्याह–**नेदमिति**। तथा च एकान्यस्याप्रसिद्ध्या अस्वामिके नेदमेकस्यापीति प्रयोगो न सम्भवतीत्याशय:। वृत्त्यनियामकोऽपि सम्बन्ध: कुतो न प्रतियोगितावच्छेकक इत्यतो बाधकान्तरं सूचयति चैत्रो नेति, नेदं चैत्रस्येत्यादौ चैत्राभावबोधने तु भूतले न घट इत्यादावनुयोगिनि सप्तम्यपेक्षेति हृदयम्। मिश्राणां व्याख्यानमुपन्यस्यति– **हेतुविषयकेति**–हेतुविषयकज्ञानजनकत्व–समानाधिकरणं प्रतिज्ञात्वमपीत्यतो व्याप्येति–हेतुविषयकज्ञाजनकत्वव्याप्यमपि तत्तत्प्रतिज्ञात्वमित्यवयवतावच्छेदकेति उदाहरणत्वमपि न लिंगविषयकज्ञान–जनकत्वनियतमित्युदारहणान्येति, उदासीनवारणाय–न्यायावयवेति। अत्राहु:–अवयवतावच्छेदकमिह सकलहेत्ववयवसाधरण– हेतुत्वादिकं विविक्षितमुत तल्लिंगकहेतुत्वादिकम्? आद्ये न तत्प्रकृतलिंग–विषयकत्वव्याप्यम् लिंगत्वस्य केवलान्वयितया लिंगपदेन प्रकृतलिंगस्यैवाभिधानात्, अन्त्ये गन्धवल्लक्षक–प्रतिज्ञात्वमपि लिंगविषयकज्ञानजनकत्व– नियतमित्य– व्यापितादवस्थ्यमत एवास्वरसादत्र केचिदित्युक्तमिति **गौड़ा:**, तच्चिन्त्यम्, तथाहि हेतुसाध्यपक्षेषु यो यो येन येनावयवेन ग्राह्यस्तदभेदेनावयवतावच्छेदकं रूपं भिद्यते गन्धवत्पक्षकभेद–साध्यकयावत्प्रतिज्ञासाधारणं प्रतिज्ञात्वं न प्रकृतहेतुविषयकज्ञानजनकत्वनियतं पृथिवीत्वहेतुक–प्रतिज्ञायां तदभावात्, प्रकृतपदेन स्वसमभिव्याहृतहेत्ववय–वप्रतिपाद्यहेतोरभिधानात्। हेत्ववयवत्वन्तु हेतुभेदादेव वस्तुतो मिश्रैरपि प्रथमतो लिंगाविषयेत्यत्र नञ्व्यत्यासेन लिंगविषयकज्ञानजनक– त्वनियतावयवान्यत्वमुक्त्वा पश्चादित एवास्वरसात् तेनोदारहणाद्यवयवचतुष्टयान्यत्वं पर्यवसितमिति न काप्यनुपपत्तिरिति कण्ठत: कथितमिति हेत्वाद्यवयवचतुष्टयान्यतमा वयवत्वमेव

समञ्जसं लक्षणमिति मन्तव्यम्।

ननूदाहरणेन व्याप्तिरुपनयेन पक्षधर्मता चोपनीतेति तदा तदुभयविशिष्ट–लिंगपरामर्शान्निगमनेन साक्षादेव स्वार्थानुमितिहेतुः परामर्शो जन्यत इत्यनुपपन्नानि सर्वाणि प्राचीनानि लक्षणानीत्यत आह मूले–**निगमनञ्चेति**। परामर्शः स्वार्थानुमित्युपहितः। **अबाधितेति**। अबाधितः असत्प्रतिपक्षितत्वज्ञानजनो यत्र तादृशत्वादिति विग्रहः प्रतिपक्षो विषयः, जनः = समूहः, तथा चासद्विषयकत्वस्याप्रामाण्यस्य ज्ञानसमूहः प्रकृते न बाधित इति तज्जनितः परामर्शः कथं स्वार्थनुमितिमुपदध्नीत, अप्रामाण्यशंकायाः स्वार्थनुमितिविरोधित्वादिति भावः। जिज्ञासानुपधायकप्रतिज्ञायामव्याप्तिरत आह **दीधितौ–योग्यतेति**। योग्यता तु पूर्वत्वमात्रं, तेन यस्य न्यायस्यावयवत्वं तन्न्यायीयहेत्ववयव– पूर्ववर्त्तित्वं लभ्यतेऽतो न्यायान्तरावयवान्तरे तन्न्यायपूर्वोच्चरिते नातिप्रसंगः।

**लिंगाविषयकेति मूलम्**। अत्र **मिश्राः** सिद्धिसाध्यं तद्विषयकं तद्विधेयकं यज्ज्ञानम् तज्जनकत्वमर्थः। पर्वतो वह्निमानित्यादौ वह्निरेव विधेयः, न तु तस्य सम्बन्धः सम्बन्धी वा तयोरनभिधाने वह्नेर्विधातुमशक्यतया तद्विधानार्थमेव तदभिधानात्। उदाहरणे स वह्निमानित्यादौ वह्निर्न विधेयः, किन्तु वह्निमुद्दिश्य धूमवद्वृत्तित्वम्, अन्यद्धि प्रकारत्वमन्यद्विधेयत्वमित्थमुपनस्थायंपदानुषङ्गेण साध्यविधायकबोधजनके निगमनेऽतिव्याप्तिवारणाय **लिंगविषयेति**। लिंगविषयत्वं तु निरुक्तलिंगविषयत्वमितरथा पृथिवी भिद्यते पृथिवीत्वादित्यत्र प्रतिज्ञायामव्याप्तिप्रसंगादिति व्याख्या। तत्रान्यस्य प्रकारत्वमन्यस्य च विधेयत्वमसहमानो **दीधितिकारो** यथाश्रुते गन्धवती भिद्यते गन्धादित्यत्राव्याप्ति–प्रसंगाल्लिंगाविषयकत्वमन्यथा व्याचष्टे **पूर्वोपदर्शितार्थकमिति**। प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यविषयताबहिर्भावेण लिंगाविषयकेत्यर्थकमित्यर्थः। **अभावेति**, निर्धूमो निर्वह्नित्वादित्यत्र यो यो धूमवान् सवह्निमानित्युदाहरणवारणायेत्यर्थः। तेन तद्वद्विशेष्यकत्वपर्यन्तानुसरणेन स्नेहसमवायिकारणतावच्छेदिकाया जलत्वजातेः परमाणुवृत्तित्वे व्यभिचारात्स्थलान्तरमाह इदं द्रव्यमिति। ननु प्रकृतपक्षे प्रकृतसाध्य–वैशिष्ट्यविषयताबहिर्भावेण लिंगाविषयकं यत्साध्यविशेष्यकं ज्ञानं तज्जन–कन्यायावयवत्वस्य प्रतिज्ञालक्षणत्वे धूमाभाववान् वह्न्यभावादित्यत्र यत्र यत्र धूमस्तत्र वह्निरित्युदाहरणेऽतिव्याप्तिस्तज्जन्य–बोधस्य साध्यवद् धूमादि–मुख्यविशेष्यकत्वादतः कल्पान्तरमाह–**लिंगाविषयेत्यस्येति**। पूर्वोक्तेति, प्रकृतहेतौ

प्रकृतसाध्यसिद्धौपयिकेत्यर्थः। ननु लिंगिविषयत्वं यदि साध्यवद्विशेष्यकत्वं तदा घटोऽभिधेयः प्रमेयत्वादित्यत्र हेत्ववयवेऽतिप्रसंगः हेतुत्वस्यापि साध्यत्त्वात्, अथ साध्यविषयकत्वमात्रं तदा पर्वतो वह्निमान् वह्निसामग्र्या इत्यत्र हेत्ववय–वेऽतिव्याप्तिरतोऽन्यथा निर्वक्ति–**प्रकृतेति**। हेतुतावच्छेदकावच्छिन्नेत्यस्य फलमाह–**वह्निमानिति**। हेतुत्वविषयेत्यस्य फलमाह–अयं हेतुरिति। ननु लिंगविषयकेत्यस्य साध्यवत्पक्षावगाहित्वार्थकत्वेऽपि तथाविधहेतुवारणत्वं हेत्ववयवजन्यबोधस्य हेतुत्वात्मकसाध्यविशेष्यकत्वादिति हेतुत्वसाध्यकन्यायमाह–इदं वेति। तथा च प्रकृते हेतुप्रकारतानिरूपित–हेतुतात्वावच्छिन्नविशेष्यता–विषयताकत्वमेव लिंगिविषयकत्वं वाच्यय् अन्यथा पर्वत एको धूमादित्यत्र प्रकृतहेतूपरक्तहेतूक्तविषयताबहिर्भाविणैकत्वग्राहकस्य हेत्ववयवस्य दुर्वारतापत्तेरयं यागवान् यागकृतेरिति न्याये यत्रानुकूलतासंसर्गेण यागसम्बन्धिनी कृतिर्हेतुत्वेनाभिमता तत्र यागानुकूलाभिन्नकृतित्वेन हेतुप्रयोगेऽतिव्याप्तेश्चेति ध्येयम्। एतेनेत्यादिमूलं पञ्चभिरवयवैरेकवाक्यतया जनिते वाक्यार्थबोधे विद्यमानां जातिमादायावयव–मात्रेऽतिप्रसंगः स्यादित्यत आह– कृतकत्वादिति। अवयवान्तरजन्यज्ञाना–वृत्तिरपूर्वविशेषजनकतावच्छेदिका शापानुग्रहादि–शब्दनिर्वचनानुरोधात् सिद्धा। शाब्दत्वावान्तरजातिस्तद्योगिज्ञानजनके शापादिरूपोदासीनवाक्येऽतिव्याप्तिवारणाय वृत्यन्तमिति विशेषणम्। लिंगिधीर्न्यायजन्यो महावाक्यार्थबोधस्तत्परं तज्जनकं वाक्यजन्यज्ञानमवयवजन्यो वाक्यार्थबोधस्तद्वृत्तिरवयवान्तरजन्यज्ञानावृत्तिर्या जातिस्तदाश्रयजनकत्वं प्रतिज्ञैकदेशेऽतिव्याप्तमतः शब्दो नित्य इति ज्ञानाकारप्रदर्शनम्। तथा च तथाविधाकारकविजातीयशाब्दत्वावच्छिन्ने जनकत्वं लभ्यते। एतन्मते पञ्चभिरवयवैः पञ्च वाक्यार्थबोधाः विजातीयास्ते स्वजन्यसंस्कारद्वारा न्यायजन्यविजातीये वाक्यार्थबोधे कारणानीति वासना। अथ हेत्वादिचतुरवयवक एव न्याय इति वादी प्रत्यवतिष्ठते–**नन्विति**। न साधनाङ्गम्–न न्यायावयवः पक्षः, साधनीया कोटिस्तस्याः परिग्रहे–स्मरणे तत्र विप्रतिपत्तौ प्रमाणेन हेतुपञ्चम्याः सहायकापेक्षायां प्राथम्यात्प्रथममेवाभिधातुं योग्यत्वात्। तथा च शब्दोऽनित्योऽनित्यो वेति विप्रतिपत्त्या अनित्यवादिकोटेः स्मरणम् अनित्य इति पदेन सहकृतत्वाद् इत्यस्याकांक्षा च विद्यत इति प्रथममभिहितेनापि हेतुना विप्रतिपत्तिवाक्य– सहकृतेनाभिमतबोधनिर्वाहादलं प्रतिज्ञयेति भावः। विप्रति–

पत्तिघटकहेतुसाकांक्षपदजनिता पदोपस्थितिरेव नास्तीत्याह **नेत्यादि**। आकांक्षायां नियोगे प्रतिवादिविप्रतिपत्त्या तन्नियोगेन एवञ्च विप्रतिपत्तिवाक्यजनिता पदार्थोपस्थिति: समयबन्धेन परनियोगेन चान्तरितेतिपदजन्यपदार्थोपस्थित्यभावान्न प्रतिज्ञां विनाऽभिमतबोधनिर्वाह इति भाव:। इत्थं पदजन्यपदार्थोपस्थित्यभावान्न प्रतिज्ञया विनाभिमतबोधनिर्वाह इत्युपपाद्य विप्रतिपत्तिंवाक्यघटकं पदं हेतुना सह साकांक्षमपि न भवतीत्याह— **विप्रतिपत्तिवाक्यस्येति**, पक्षंपरिग्रहो नित्यत्वादिकोटिक: संशयस्तत्पर्यवसितत्वेन तद्विषयकत्वेन निराकांक्षत्वादिति हेत्ववयवेनेति शेष:। शब्दो नित्यो नवेति विप्रतिपत्तिवाक्ये नित्यतदन्योऽन्याभावौ पदार्थविधया वाक्यार्थविधया चोपस्थितौ वाकारार्थे सन्देहे विषयतयान्वितौ, सन्देहस्तु शब्दान्वयीति नित्यतदन्योऽन्याभावकोटिकसंशयविषय: शब्द इत्यन्वयबोधस्तत्र हेत्ववयवार्थस्तद्धेतुकत्वं न वाकारार्थेऽन्वेति। बाधान्नापि नित्यपदार्थे नित्यज्ञाने विप्रतिपत्तिरथ नित्यशब्दस्य ज्ञानलाक्षणिकत्वाभावादन्यथा तस्य विषयतया सन्देहेऽन्वयो न स्यात्। यदाहुर्मिश्रा:— प्रतिज्ञासाधनाङ्गमेव विप्रतिपत्ते: साध्यपरतया हेतुत्वेनाकांक्षितत्वेन तत: प्रतिज्ञाफलनिर्वाहादिति। नापि ज्ञापकत्वं ज्ञाप्यत्वं वा हेत्वर्थ इति मते सन्देहविशेषणादित्यादि—पदार्थे तदन्वयौपयिकाकांक्षा, अन्यथा धूमात्पर्वतो वह्निमान्न वेत्यादिवाक्यस्यापि योग्यत्वापत्तेरिति भाव:। अथ नवा पदं विना कृतस्य शब्दो नित्य—इति भागस्य पुनरनुसन्धानात्तज्जनितपदार्थोपस्थितिस्तस्य हेत्ववयवेन सहाकांक्षा च सम्भवतीत्यत आह—**आवृत्तौ त्विति**, न चावयवान्तरादिति। उदाहरणात्साध्यं प्रतीयमानमपि न पक्षातावच्छेदकावच्छेनेनान्वेति किन्तु हेतुमत्त्वावच्छेदेन निगमनात्पुनरुपनयस्थायंपदानुषंगत: पक्षे प्रतीयमानमपि साध्यं न हेत्वान्वययोग्यं तस्मादित्यनेनावरुद्धत्वादिति भाव:।

**आक्षेपादिति**, हेत्ववयवयोग्यसाध्योपस्थितिरित्यनुषज्यते। तथा चोदाहरणोपनयाभ्यां साध्यवान् पक्ष आक्षिप्यते, तत्र हेत्ववयवान्वय इति आशङ्कितुराशय:। साध्यान्वये साध्ये हेत्वोर्ज्ञाप्यज्ञापकभावान्वये तदभिधान—मुदाहरणाद्यभिधानं हेतो:साध्यज्ञापकतोपपादकतयोदाहरणोपनययो: प्रयोग इति भाव:। **तस्मादिति**, गां बधानेत्यादौ जातेर्बन्धनकर्मत्वप्रतित्यनुपपत्त्या व्यक्तिराक्षिप्यते, न चेह तथा, वह्निमत्पर्वताक्षेपं विनाप्युदारहणादिवाक्यार्थ— बोधनिरुपपत्ते:। पीनो देवदत्तो दिवा न भुंक्ते इत्यादौ दिवसाभोजिन: पीनत्वं प्रतीतमपि रात्रिभोजनं

विनानुपपन्नमिति तदाक्षिपति, न चेह तथा, वह्निमत्पर्वतं विना धूमवत्त्वावच्छेदेन वह्निमत उदाहरणवाक्यार्थस्यानुपपत्तिविरहात्। यद्यप्युपनयवाक्यार्थो धूमवान् पर्वत इति पर्वते वह्निमत्तामन्तरानुपपन्न इति तदाक्षेपे क्षमते, तथापि वादिवाक्या–दनुपस्थितमपि योग्यतयान्वेतीत्यतिप्रसंगदिति पूर्वोक्तनिर्भर:। अन्ये त्वित्यारभ्य तदसम्भवादित्यन्त एक: सन्दर्भ:। अतएव मिश्रैरन्येषां मते शब्दानित्यत्वे प्रमाणं वदेति वाक्यं साध्यविशेषितस्य साध्योपलक्षितस्य वा साधनस्याभिधाने नियोग इति निर्धारयितुं शक्यत इत्यस्वरसमुद्‌भाव्य तत: पूर्वोक्तयुक्तिमु–पसंहरति–तस्मादितीत्यवतारितम्।।

**चिन्तामणि:**

**साध्यनिर्देशानन्तरं कुत इत्याकांक्षायां साधनताव्यञ्यक–विभक्तिमल्लिङ्ग वचनमेवोचितम् अन्यथानाकांक्षिताभिधाने निग्रहापत्ते:। लोके तथैवाकांक्षा– निवृत्तिव्युत्पत्तेरिति प्रतिज्ञानन्तरं हेतूपन्यास:। हेतुत्वं च अनुमितिकारणीभूत–लिङ्गपरामर्शप्रयोजनक– शाब्दज्ञानजनक–साध्याविषयकशाब्दधीजनक–हेतुमच्छब्दकत्वम्। प्रतिज्ञावाक्यधीजन्य–कारणाकांक्षानिवतर्कज्ञानजनक– हेतुविभक्तिमद्‌वाक्यत्वं वा, पञ्चम्यन्तलाक्षणिक–पदवदनुमितिपरवाक्यत्वं वा। हेतुपदेन ज्ञाने लक्षणा, अन्यथा लिंगस्याहेतुत्वेन हेतुविभक्त्यर्थानन्वयात्, तथैवाकाङ्क्षानिवृत्ते:। अनुमितिहेतुज्ञानकरणधूमवत्त्वादिशब्दजन्य– ज्ञानवृत्तिप्रतिज्ञादिजन्य–ज्ञानावृत्तिजातियोगिज्ञानजनकवाक्यत्वं हेतुत्वमित्यन्ये। वाक्यविशेष–जन्यत्वस्यापि जन्यतावच्छेदकरूपापरिचये दुर्ग्रहादित्यपरे।**

**अन्वयव्याप्त्यभिधायकावयवाभिधायकावयवाभिधान–प्रयोजनक–ज्ञानजनकहेतुत्व–प्रतिपादकविभक्तिमन्न्यायावय–वत्वमन्वयिहेतुत्वम्। एतदेव व्यतिरेकव्याप्त्यभिधायकपदप्रक्षेपाद् व्यतिरेकि–हेतुत्वम्। अन्वयव्यतिरेकोदाहरणाकांक्षाप्रयोजक– तथाभूतावय–वत्वमन्वयव्यतिरेकिहेतुत्वम्। यद्वा पक्षसपक्षसतो विपक्षासतो हेतुवचनमन्वयव्यतिरेकि। अत्यन्ताभावाप्रतियोगिसाध्यसमानाधिकरण–पक्षसपक्ष– सद्धेतुवचनं केवलान्वयि। यद्वा अनुमितिकारणी–**

भूतशाब्दज्ञानकारणसाध्याविषयक–शाब्दधीजनकप्रतीतान्वयसाध्य–साधनवाचकहेतु–विभक्तिमच्छब्दत्वमन्वयिहेतुत्वम्। एतदेवाप्रतीतान्वयसाध्य साधनेति विशेषणाद् व्यतिरेकिहेतुलक्षणम्।

कथायां धूमादित्येव प्रयोक्तव्यम्, न तु धूमवत्त्वादिति, मतुपो व्यर्थत्वात्। सम्मान्यवत्त्वे सति बाह्यकरण–प्रत्यक्षत्वादित्यपार्थकम्। विभक्त्युपस्थापितहेतुत्वेन सामान्यवत्त्वस्य विभक्त्यन्तरावरुद्धस्यान–न्वयादिति केचित्। तन्न, सति सप्तमीदलात् सामान्यवत्त्वस्य बाह्यकरणप्रत्यक्षत्वस्य सामानाधिकरण्योपस्थितौ विशिष्टे हेतुत्वान्वयात्। तथैव व्युत्पत्तेः। न ह्ययमर्थोऽसन्नावगम्यत इति।

इति चिन्तामिणौ हेतुग्रन्थः।

दीधितिः–

अनुमितीत्यादि–जनकान्तं न्यायावयवार्थकम्। निगमनवारणाय साध्याविषयकेति। साध्याविषयकत्वं च प्रकृतहेतुतावच्छेदकावच्छिन्नहेतु–विशिष्टहेतुत्वविषयताबहिर्भाविण, पूर्वोपदर्शितसाक्षात्परम्परासाधारण–प्रकृतपक्षविशेषणत्वेन वा तेन पूर्वोपदर्शितहेतौ नाव्याप्तिः। इदं न दण्डाज्जातं दण्डसंयोगजन्यद्रव्यत्वात्, अयं न धूमादालोकवान् आर्द्रेन्धनशून्यत्वादित्यादौ व्यतिरेक्युदाहरणस्य, हेतुत्वपक्षकसाध्यान्वितस्वार्थबोधकेदं पदशालिन उपनयस्य च वारणाय हेतुविभक्तिमदिति। तदर्थश्च प्रकृतसाध्यान्वित–स्वार्थबोधनक्षमार्थोपस्थिति–जनकविभक्तिमत्त्वम्।

हेत्विति सम्पातायांतम्। यदि च पर्वते पर्वतभिन्नत्वप्रकारकज्ञानस्य विशेष्यतया अभावस्य साध्यत्वं हेतुत्वं च, सिषाधयिषया च न्यायप्रयोगः, तत्र यथा तादृशज्ञानाभावादुत्पन्नं ज्ञानमिति दृष्टान्तशालिनी व्यतिरेक्यु–दाहरणेऽतिव्याप्तिरित्युच्यते, तदा अवयवान्तरोपस्था– पितार्थान्वितस्वार्थबोध ाकविभक्तिमत्त्वं वक्तव्यम्, उदाहरणान्यत्वेन वा विशेषणीयम्। केचितु साध्यविषयकधीजनकत्वानियतहेतु– विभक्तिमत्त्वनियतावयवता–वच्छेदकरूपवत्त्वं समुदितलक्षणार्थ इत्याहुः। तच्चिन्त्यम्, हेतुत्वप्रतिपादकेति,

विभक्त्यर्थहेतुत्व–विशेष्यकान्वयबोधजनक– न्यायावयवत्वमर्थ:।

हेतुत्वं प्रमेयमित्यादिप्रतिज्ञावारणाय विभक्त्यर्थेति। तस्मादितरेभ्यो भिद्यत इत्यादि–निगमनवारणाय **हेतुत्वेति–विशेष्येति** च। घटो दण्डाद् वह्निर्धूमादित्यादिका न प्रतिज्ञा:, तद्वृत्तेस्तदात्मनश्च तद्धर्मव्यापकत्वायोगात्, सम्प्रदायविरोधाच्च, तेन तन्त्रत्यनिगमने नातिप्रसंग इति भाव:। **उदाहरणेति,** क्वचिज्जिज्ञासानुत्पादेऽपि तद्योग्यता सत्त्वान्नाव्याप्ति:। अनुक्तोदाहरणस्थलेऽपि तादृशस्वरूपयोग्यतासत्त्वात् तद्वारणाय **न्यायावयवेति**। उदाहरणत्वं चेदं न न्यायावयवत्वगर्भम्, वैयर्थ्यात् साध्याविषयकेत्यादि, अयं न दण्डाद् दण्डसंयोगाजन्यद्रव्यत्वादित्यादौ प्रतिज्ञानिगमनयोर्वारणाय साध्याविषयेत्यादि व्याख्यातार्थकम्। उपनयविशेषवारणाय **हेतुपञ्चम्यन्तेति**। हेत्विति हेतुत्वबोधकार्थकम्। हेतुपञ्चम्योर्वैकल्पिकमुपादानम्, उपनयस्य चान्तेऽनुसन्धीयमाना प्रथमैवान्त:। एवं दण्डादित्यादे: स्वरूपस्यापि दृष्टान्तस्य पञ्चम्यन्तत्वेऽन्वयायोगात् कस्यचिद् व्यतिरेकिण उदाहरणस्य पञ्चम्यन्तत्व सम्भवे तु तद्वारणं पूर्ववत्। अत्र चार्थवद्भागस्य हेतुपञ्चम्यन्तत्वं बोध्यम्। तेन निरर्थकतसिलन्ते वह्निप्रमात इत्यादौ नाव्याप्ति:। पञ्चम्यादे: तसि–लाद्यादेशत्ववादिनां नये तु नानुपपत्तिगन्धोऽपि।

केचित्तु हेतुपञ्चम्यन्तत्वं हेतुत्वप्रतिपादकपदशालित्वं पूर्ववत्। साध्याविषयकबोधजनकत्वं च इतरापेक्षेण प्रकृतहेतुत्वाविशिष्टसाध्य–विषयज्ञानाजनकत्वम्, साध्यञ्चेह न विवक्षितं वैयर्थ्यादित्याहु:। **पञ्चम्यन्तेति**। अनुमितिपरवाक्यत्वमवयवत्वं हेतुत्वादौ पञ्चमी लाक्षणिकी, वृक्षाद्विभजत इत्यादौ लाघवेनावधित्वे अवधिमत्त्वे वा शक्तत्वात्। द्रव्यनिष्ठावधित्वमिव विभागनिष्ठमवधित्वमपि सम्बन्धविशेष:। स चातिरिक्तोऽनतिरिक्तो वेति अन्यदेतत्। तत्सम्बन्धाग्रहेऽपि व्यवहार:, शक्तिभ्रमात्। वृक्षादपैति वा पततीत्यादौ लाघवाद्विभागे शक्ति: तज्जनकत्वञ्च क्रियायां संसर्गमर्यादया भासत इत्यपि वदन्ति। अत: पञ्चम्यन्तेति लाक्षणिकविशेषणम्। तस्मादित्यत्र च तत्पदे न लक्षणा, शक्त्यैव तादृशज्ञानोपस्थितिसम्भवात्। पर्वतो वह्निमान्

वह्निसामग्रीमान् वा तस्मादित्यादिकस्तु न प्रयोगः सम्प्रदायविरोधादिति वदन्ति।

यत्तु हेत्वन्वयानुरोधाद्वह्निमान् इत्यादावपि ज्ञानलक्षणेति। तदसत्, पञ्चम्याः ज्ञापकत्वे ज्ञाप्यत्वे वा लक्षणयैवोपपत्तौ तत्र लक्षणायां मानाभावात्। अत एवोक्तमावृत्तौ सैव प्रतिज्ञेति। अतएव व्याचक्षते यतो द्रव्यं गुणाः कर्मेत्यत्र हेतुत्वं यथासम्भवमुत्पादकत्वं ज्ञापकत्वं चेति। अतएव लोके किं वह्निमदिति पृष्टे तद्गृहं वह्निमदित्युत्तरिते कुत इति जिज्ञासा धूमवत्त्वादित्युत्तरं च। नहि तत्र ज्ञाने प्रश्नः, येन लक्षणया ज्ञानेनोत्तरयेत्। न वा परकीयभाविप्रश्नानुरोधादजिज्ञासिताभिधानम्। न वा कुत इति प्रश्ने ज्ञातमित्यध्याहारो, मानाभावात्। दाहो दहनात् न जलात् जलं स्पर्शवत् रूपात्, न गन्धात् नापि शब्दादित्यादौ नञर्थान्वयानुरोधात्। जन्यत्वरूपहेतुमत्त्वं जन्याज्ञानविषयत्वरूपज्ञाप्यत्वञ्च पञ्चम्यर्थः। एवञ्च हेतुमत्त्वे शक्तावपि ज्ञाप्यत्वे लक्षणैव। न च धूमादालोकवान् पर्वतो वह्निमान् धूमात्, वह्निमत्सधर्मी पर्वतो वह्निमान् धूमादित्यादौ प्रतिज्ञायां पर्वतो धूमाद्वह्निमानित्यादौ च तत्रत्येऽभिगमने चातिव्याप्तिः प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्थापितप्रकृत--साध्यान्वितस्वार्थबोधकपञ्चम्यन्तलाक्षणिकपदवदवयवत्वस्य विवक्षितत्वात्।

यत्तु अयमात्मा ज्ञानादित्यत्राव्याप्तिः शक्त्यैव ज्ञानोपस्थितिसम्भवे लक्षणाविरहादिति, तन्न, यद्विषयकज्ञानस्य हेतुत्वमवगतन्तस्य व्याप्त्यादि जिज्ञासायामुदाहरणादिप्रयोगः। न चेह ज्ञानविषयकत्वेनोपस्थिति-- र्विना लक्षणाम्, अन्यथा सुखादेरपि व्याप्त्याद्युपदेशनप्रसंगात्। केचित्तु पञ्चम्यन्तलाक्षणिकपदवत्त्वव्यभिचार्यवयवतावच्छेदकरूपवत्त्वं, तादृशपद वत्त्वव्यभिचार्यवयवतावच्छेदकशून्यावयवत्वं वा विवक्षितमित्याहुः।

नव्यास्तु-- पञ्चम्याः ज्ञानज्ञाप्यत्वे लक्षणयैवोपपत्तौ न प्रातिपदिकेऽपि लक्षणा, आकांक्षावैचित्र्याच्च पदार्थैकदेशेऽपि ज्ञाने प्रातिपदिकार्थो विषयित्वेनान्वेति, कर्तृकृतीव कृतौ धात्वर्थः। यद्धर्मविशिष्टश्च हेतुः प्रयुज्यते आकांक्षादिवशात् तद्धर्मविशिष्टस्यैव व्याप्यत्वमुपदर्श्यते, अन्यथा

यथार्थधूमज्ञानादित्यादिप्रयोगेऽपि धूमादेर्व्याप्यत्वोपदर्शनप्रसंग इति प्राहुः।

इतरान्वित–स्वार्थबोधकत्वे सति स्वीयं यदन्तभिन्नं पदं तदर्थविशेष्यकान्वयबोधजनकत्वे सति अन्त्यपदवत्त्वे सति, स्वीयानन्त्य–पदार्थविशेष्यकान्वयबोधाजनकान्यत्वे च सति न्यायावयवत्वं **प्रतिज्ञात्वम्**। प्रतिज्ञाहेत्वोरूपनयनिगमनयोः स्वार्थौ परस्परमन्वितौ, न तूदाहरणस्य केनापि। पदं विभक्त्यन्तम्। तेन निगमने नातिव्याप्तिः। प्रकृतपक्षान्वितस्वार्थ–बोधकपदोपस्थापितार्थान्वित–स्वार्थबोधकन्यायावयवत्वं **हेतुत्वम्**। निगमनवारणायोपस्थापितान्तम्। प्रमेयत्वमभिधेयं प्रमयत्वादित्यादौ प्रकृत्यर्थपक्षान्वितस्वार्थबोधकपञ्चम्यन्तार्थान्वितौ न प्रतिज्ञार्थः। अपि तु तदेकदेशार्थ इति।

स्वार्थ–विशिष्टवैशिष्ट्य–बोधजनकन्यायावयवत्वम्। विशिष्टवैशिष्ट्य बोधजनकस्वार्थबोधजनकन्यायावयवत्वम्। विशिष्टवैशिष्ट्या बोधजनक–स्वार्थविशिष्टबोधजनकन्यायावयवत्वं वा तत्त्वम्। एकवाक्यतया हेत्वर्थविशिष्टसाध्यवैशिष्ट्यं भासते, न पुनरवयवान्तरार्थविशिष्टस्य कस्यचिदिति।

**दीधितिविद्योतः**

**साध्यनिर्देशानन्तरमिति**– कुत इति पञ्चम्यन्तमात्रोपलक्षणम्, आकांक्षा समयः, अनाकांक्षिताभिधाने समयमतिक्रम्याभिधाने लोकेऽपि तथैव साध्यं निर्दिश्य हेतुरुपन्यस्तव्य इत्येव आकांक्षायाः समयस्य निवृत्तिरुत्सर्गः। तथा च प्रतिज्ञानन्तरं हेतुरभिधेय इति लोके शास्त्रे च समयबन्धात् साध्यानिर्देशानन्तरं हेतूपन्यास इति निगर्वः। एतेनावयवविच्छेदे वादिनो मध्यस्थस्य वा सर्वत्र कुत इत्याकांक्षानियमे प्रमाणाभावः कस्यचिदन्यत्रैवाकांक्षा सम्भवति। न च प्रतिज्ञावाक्येन सह हेतुवाक्यस्य संगतिप्रदर्शनमिदमित्यपि साम्प्रतम्, संगतेर्वाक्यैकवाक्य–तानिष्पादकतया पदैकवाक्यतापन्ने तदुपदर्शनानौचित्यात्। अत एवोपनयानन्तरं निगमनमिति संगतिप्रदर्शनं विना कृतमेवेति निगमनावतारणमग्रिममुपपद्यते। अन्यथा प्रतिज्ञाभागयोरपि संगतिप्रदर्शनप्रसंगादित्यादि समाहितम्। जनकान्तस्य न्यायान्तर्गतत्वपरत्वे तस्मादिति निगमनैकदेशेऽतिव्याप्ति र्न च तच्छदेन

साध्यव्याप्यस्य हेतोः परामर्शात् साध्यविषयकत्वदलेनैव वारणमिति **मिश्रोक्तं** युक्तम्, धूमाभाववान् वह्न्यभावात्, यो यो धूमवान्, स वह्निमान् धूमव्यापकवह्न्यभाववानयम्, तस्माद् धूमाभाववानिति न्याये तस्मादिति तच्छब्देन धूमव्यापक–वह्न्यभावत्वेनैव हेतोः परामर्शात् तस्मादित्यस्य साध्याविषयक–शाब्द–जनकत्वसम्भवादतो दीधितौ **न्यायावयवार्थकमिति**। **प्रकृतेति**– हेत्ववयवानां यादृश–यादृशविषयताकबोधजनकत्वेन सम्प्रदायसिद्धत्वं तादृशविषयताबहिर्भूतसाध्यविषयताशून्यत्वं साध्याविषयकत्वमित्यर्थः। तेनानुकूलतासंसर्गेण यागवत्कृतिहेतुके चैत्रो यागवान् यागकृतेरित्यादौ नाव्याप्तिः साध्यपदोपादानं तु विभक्ति–मत्त्वदलसार्थक्यायान्यथाप्रकृतहेतु–प्रकारकहेतुत्वविषयताबहिर्भूतविषय–ताशून्यत्वदलेनैवावयवान्तरवारणाद्वैयर्थ्यप्रसंगात्। इत एवास्वरसाद्वा **पूर्वोपदर्शितेति**। यादृशसाध्यविषयताकत्वेन प्रतिज्ञाः सम्प्रदायसिद्धास्तादृश– विषयताशून्यत्वस्वरूपं पक्षविशेषणत्वेन साध्याविषयत्वं वाच्यमित्यर्थः। प्रतिज्ञा च क्वचित्साक्षादेव पक्षे साध्यं गृह्णाति। यथा चैत्रः पचति, घटो नेतराणीत्यादौ, क्वचित्पदार्थान्तरमन्तरं कृत्वा यथा पर्वतो वह्निमान्, पृथिवीतरेभ्यो भिद्यते इत्यादौ। तथा च नानाविध–विषयतानामनुगमाय पूर्वोपदर्शितः प्रकार आश्रयणीय इत्यावेदयितुं साक्षात्परम्परया वेत्युक्तं निगमनं पुनरुपनयस्थायंपदानुषङ्गेण प्रतिज्ञा–तुल्यविषयताकबोधजनकमिति भावः।

परे तु पूर्वोपदर्शितेति पक्षविशेषणत्वेन लिंगाविषयत्वमित्याशंकायां सूचितेत्यर्थः। तथा च प्रकृतपक्षविशेष्यतया साक्षात्परम्परया वा निरूपिता या साध्यविशेषणता तच्छून्यज्ञानजनकत्वं वाच्यमित्याशय इत्याहुः।

ह्रदो धूमाभाववान् वह्न्यभावादित्यादौ यो यो धूमवान् स वह्निमानित्युदाहरणं यथाश्रुतेन हेतुविभक्तित्त्वेन वारयितुं शक्यत इति विवक्षाप्रयोजनमाह– **इदन्नेत्यादि**। हेतुविभक्तिर्द्विविधा कारकार्था ज्ञापकार्था च। यथासंख्यं तयोर्निदर्शनमिदमुदाहरणस्येति। तथा च इदन्दण्डाज्जातं दण्डसंयोगाजन्यद्रव्यत्वात्, यद्दण्डाज्जातं तद्दण्ड–संयोगाजन्यद्रव्यं न भवतीत्युदाहरणे न्यायावयवत्वमेवं साध्याविषयक– बोधजनकत्वं यथाश्रुतहेतुविभक्तित्त्वं च वर्तत इति हेतुविभक्तौ प्रकृतसाध्यान्वय–बोधनक्षमस्वार्थोपस्थापकत्वं विशेषणमावश्यकं, यो धूमादालोकवान् स आर्द्रेन्धनवानित्युदाहरणे ज्ञापकत्वार्थकहेतुविभक्तिमत्तयापि न प्रकार इति तथा

विवक्षावश्यकीति भावः। उदाहरणस्येत्युपलक्षणं धूमादालोकव्यापकार्द्रेन्धनाभाववान– यमित्युपनयातिव्याप्तिवारणमपि तादृशविवक्षाप्रयोजनमिति ध्येयम्। विभक्तिमत्त्व– विशेषणप्रवेशप्रयोजनमाह–हेतुत्वपक्षक इति। हेतुत्वं न गुणो जात्याभावाद्यो यो गुणः स जातिमान् गुणव्यापकजात्यभाववानयमित्युपनयस्थायं पदस्य तस्मान्न गुण इति निगमनोपिस्थतसाध्यान्वयबोधनक्षमस्वार्थोपस्थापकत्वहेतुत्वार्थकत्वयोः सत्त्वात्तद्वत्युपनये साध्याविषयक–बुद्धिजनकेऽतिव्याप्तेर्वारणाय विभक्तिमत्त्वप्रवेश आवश्यक इति भावः। तदर्थस्त्वित्यादि, घटो न निषेधः सत्त्वाद्यो यो निषेधः स न सन्, यथा वाच्यत्वादभाव इति व्यतिरेक्युदारहणस्य साध्याविषयकप्रतीतिजनक– त्वमभावस्वरूपसाध्यान्वितस्वार्थबोधकहेतुविभक्तिमत्त्वं चास्तीति तत्रातिव्याप्तिवारणाय साध्ये प्रकृतेति यथाभावत्वन्निषेधत्वाभाव इति दृष्टान्तवदुदाहरणं पुनरसाम्प्रदायिकम् एकत्र साध्ये हेतुद्वयोपन्यासो नैकन्यायगोचर इति नियमात्। भवतु वा तथा, तथापि साध्याविषयकदलेनैव तद्वारणीयं प्रकृतहेतुविशिष्टहेतुत्वविषयताबहिर्भूतसाध्य विषयताकबोधजनकत्वात्। पूर्वोपदर्शितेत्यादि, द्वितीयकल्पे तु वक्ष्यमाणा– दाहारणान्यत्वप्रवेश एव शरणमत एव हेत्विति सम्पातायातमित्यभिहितम्। अन्यथास्मिन्नेव व्यतिरेक्युदाहरणे यदि यथा निषेधत्वाभाव इति दृष्टान्तस्तदा साध्यान्वितैकत्वस्वरूपस्वार्थोपस्थापक–प्रथमाविभक्तिमति तत्रोदाहरणेऽतिव्याप्ति– वारणाय हेतुपदप्रवेशावश्यकत्वप्रवेशप्रसंगात्। तज्जन्यबोधे प्रतिज्ञातुल्यविषयकत्वस्य साक्षात्परम्परया वा पक्षविशेषणतापन्नसाध्यविषयकत्वस्य चाभावसत्त्वात्। यदि चेत्यादि–पर्वतः पर्वतभिन्नत्व–प्रकारकनिश्चयविशेषाभाववान् तथाविधाभावात्, यो यः पर्वतभिन्नत्वप्रकारकनिश्चयवान्, यथा पर्वतभिन्नत्वप्रकारक– निश्चयाभावादुत्पन्नं ज्ञानमितिव्यतिरेक्युदाहरणस्य साध्यान्वितस्वार्थबोधक– हेतुविभक्तित्वं तज्जन्यबोधस्य प्रकृतविशिष्टहेतुत्वविषयताबहिर्भूतसाध्यविषयता– विरहश्च वर्तत इत्यतिव्याप्तिः। यदि च हेतुविभक्तिर्ज्ञाप्यत्वबोधिकैव प्रकृत उपादीयते तदापि तादृशनिश्चयाभावादाकाशाभाव इति दृष्टान्तवत्यु– दाहरणेऽतिव्याप्तिर्दुर्वारा। न च साध्यविशेष्यकान्वयबोधलक्षणस्वार्थोपस्थितिजनकत्वं हेतुविभक्तौ विशेषणमुपादीयताम्, इयं तु न तथेतिवाच्यम्, साध्यान्वित– स्वार्थबोधकेदंपदशालिन्युपनयेऽतिव्याप्तिवारकत्वेनोपात्तस्य विभक्तिपदवै यर्थ्यप्रसंगात्। न च हेतुत्वं न गुण इत्यादिन्याये गुणत्वव्यापकजात्यभाव इह

तस्मान्न गुणत्वमितिहेतुसाध्यप्रधानकोपनयनिगमनाभिप्रायेण हेतुत्वपक्षक इत्यादिग्रन्थ इति वाच्यम्, तादृशप्रयोगस्य **मिश्रैः** कण्ठतो निराकरणात्, तत्र निगमनोपात्तसाध्येन सहेदंपदसमभिव्याहृतसप्तम्यर्थस्यैवान्वयादिदं पदार्थस्य साध्यान्वयायोगादेवमपि **पूर्वोपदर्शितेत्यादि** द्वितीयकल्पे यथा पर्वतभिन्नभेदात्तथाविधनिश्चयाभाव इति दृष्टान्तवत्युदाहरणेऽतिव्याप्तेर्वज्रलेपत्वाच्चेति समुदायार्थः।

सिषाधयिषया न्यायप्रयोगस्सविवाद इति यदि चेत्युक्तम्। यद्वा प्रकृतहेतु–विशिष्टहेतुत्वविषयताबहिर्भूता तदव्यापिका हेतुविशिष्टहेतुत्ववैशिष्ट्यविषयतेति। विशिष्टवैशिष्ट्यविषयताघटकसाध्यविषयताशून्य–बोधजनकत्वाभावादेव निरुक्तोदाहरणं वारणीयमिति यदि चेत्युक्तम्। **अवयवान्तरेति**– यद्यपि अवयवान्तरेण प्रतिज्ञादिनापि तादृशनिश्चयाभाव उपस्थापित इतितद्दोषतादवस्थ्यं, तथाप्यवयवान्तर– घटकपदसाकांक्षविभक्तिमत्त्वे तात्पर्यम्। लाघवादाह– **उदाहरणान्यत्वेन वेति**, तच्चिन्त्यमिति तादृशरूपान्तरापरिचय एव चिन्ताबीजम्, यथाश्रुतनिगमनेऽप्यति– प्रसक्तमतो व्याचष्टे–**विभक्त्यर्थेति**। विभक्तिप्रयोज्य–हेतुत्वमुख्यविशेष्यताकबोध– जनकन्यायावयवत्वमर्थः। हेतुत्वं प्रमेयमित्यादिवाक्ये हेतुत्वनिष्ठा मुख्यविशेष्यता न विभक्तेः, किन्तु प्रकारतैवातस्तत्र नातिव्याप्तिः। **तद्वृत्तेरित्यादि**, तादात्म्यभिन्नवृत्त्यनियामकसम्बन्धेन व्यापकत्वं नाभ्युपेयत इत्यर्थः। गगनादेर्मूर्त्तत्वव्यापकता स्वयमेव स्वीकृता। ज्ञाप्यंत्वं पञ्चम्यर्थ इति मते वृत्त्यनियामकोऽपि सम्बन्धो व्यापकतावच्छेदकः सम्भवतीत्यत आह–**सम्प्रदायेति**। सुबर्थे सुबर्थान्वये व्युत्पत्तिविरहमभिसन्दधानाः साम्प्रदायिकाः साध्ये हेत्वन्वयानुपपत्त्या घटो दण्डादित्यादिन्याय एव नाङ्गीकुर्वत इति भावः।

**उदाहरणेत्यादि** मूलमुदाहरण– व्याप्यव्यापकभावप्रतिपादकं वाक्यं तस्य प्रश्नवाक्यादिक्रमेण प्रयोजिका कथमस्य ज्ञापकत्वमित्युपपादकजिज्ञासाजनको धूमो ज्ञापक इत्युपपाद्यशाब्दबोधस्तज्जनको न्यायावयवो हेतुरित्यर्थः। अत्र जनकता–स्वरूपयोग्यता, तेनोदाहरणविनाकृतस्यासाधकतासाधकन्यायस्य हेत्ववयवे नाव्याप्तिरिति **मिश्राः**। अत्रासाधकतासाधकोऽपि पञ्चावयवक एव न्यायो योग्यता च रूपान्तरापरिचये दुर्ग्रहेति मिश्रव्याख्यायामनुशयानो **भट्टाचार्यो** मिश्रोक्तस्यैव जनकान्तार्थस्य योग्यत्वस्य पूर्ववर्त्तित्वमात्रमर्थ इति मेने, **दीधितौ** योग्यतासत्त्वादुदाहरणे व्यवहितपूर्वत्वसत्त्वात्। तथा चोदाहरणव्यवहितपूर्ववर्त्तिन्यायावयवत्वं लक्षणार्थ

इति भाव:। **अनुक्तेति**, अनुक्तमनुक्तोपनय–निगमनकं यदुदाहरणं व्याप्तिप्रदर्शकं वाक्यं तत्पूर्ववर्त्तिनि वाक्येऽतिव्याप्तिवारणाय न्यायावयवत्वं देयम्। ननु तदुदाहरणमेव न भवतीत्यत आह–**उदाहरणत्वञ्चेति** वस्तुतो यन्न्यायघटकव्याप्ति–प्रदर्शकवाक्यपूर्ववर्त्तित्वं तन्न्यायावयवत्वं हेतुत्वमिति वाच्यमेव, न चैतन्न्या–यान्तरीयोदाहरणाव्यवहितपूर्ववर्त्तिनि न्यायान्तरीयनिगमनादा– वप्यतिव्याप्तिप्रसंगादिति ध्येयम्। साध्याविषयकेतिमूलमत्रानुमितिपर–शाब्दत्वम् न्यायावयत्वं, साध्याविषयकेत्यस्य नञर्थो जनकत्वेनान्वेति। तेन साध्यविषयक–ज्ञानाजनकन्यायावयवत्वं हेतुपञ्चम्यन्तन्यायावयवत्वं चेति लक्षणद्वयम्, साध्यो विधेय:, तद्विषयकत्वं विधेयताख्यविषयताशालित्वमिति यावत्। हेत्ववयवे विभक्त्यन्तद्वयाभावादुद्देश्यविधेयभावेनान्वयबोधे न सम्भवति। प्रत्ययार्थमुद्दिश्य च प्रकृत्यर्थो न विधीयत इति जन्यत्वे सति सत्त्वादित्यादावुद्देश्यविधेयभावेनान्वयस्य क्वचित्सम्भवेऽपि सविषयक–ज्ञानजनकत्वनियतावयवतावच्छेदकधर्मशून्यत्वं वक्तव्यमिति नाव्याप्तिरत **एवालोके** साध्यज्ञानाजनकत्वेन तज्ज्ञानजनकत्वा–नियतत्वमुक्तमित्युक्तम्। हेतुपञ्चम्यन्तेत्यत्र द्वन्द्वगर्भो बहुव्रीहि:, हेतुश्च पञ्चमी च हेतुपञ्चम्यौ तयोरन्तो विश्रामो यत्रेत्यर्थ:, पञ्चमी तदर्थस्तेन हेतुता–वच्छेदकावच्छिन्नविशिष्टहेतुत्व–विषयताबहिर्भूतविषयताशून्य– ज्ञानजनक–न्यायावयवत्वं द्वितीयलक्षणार्थ इति **मिश्रानुसारिण:**। यथाश्रुतसाध्याविषयकत्वस्य पर्वतो वह्निमान् वह्निसामग्र्या इत्यादावव्याप्तेराह– **व्याख्यातार्थमिति दीधिति:**, प्रकृतहेतुविशिष्टहेतुत्व– विषयताबहिर्भावेण साध्याविषयकत्वार्थकमित्यर्थ:। उपनयविशेषस्येति ह्रदो धूमाभाववान् वह्न्यभावादित्यत्र धूमव्यापकवह्न्य–भाववानयमित्याकारकस्येति शेष:। उपलक्षणमिदं तत्रैव यो धूमवान् स वह्निमानित्युदाहरणस्यापि व्यावृत्तिरस्य फलमिति ध्येयम्।

**वैकल्पिकमिति**–हेतुवाचकपदान्तानुमितिपरशाब्दत्वं पञ्चम्यन्तानुमितिपर–शाब्दत्वञ्चेति लक्षणोत्तरदलत्वमन्यतरस्यामिति भाव:। ननु प्रथमलक्षणे हेतुत्वं धूमाभाववद् वह्न्यभावात्, यो यो धूमवान् स वह्निमान् धूमव्यापकवह्न्य–भाववदिदमित्यत्रोपनये साध्यानवगाहिनि हेतुत्ववाचकेदंपदान्तेऽतिव्याप्तिरतआह–**उपनयस्य चेति**। **प्रथमे वेति**, तथा चान्तत्वमानुसन्धानिकं न त्वौपचारिकमिति भाव:। द्वितीयलक्षणेऽतिप्रसंगं निरस्यति–**एवं दण्डादिति**, दृष्टान्तस्येति प्रथमैवान्त

इति पूर्वेणान्वयः, अन्यथा घटो न शब्दोऽगुणत्वात्, यच्छब्दः स गुणो यथा दण्डादिति स्वपरदृष्टान्तकोदाहरणेऽतिप्रसंगादिति भावः। उभयत्रान्ते प्रथमानुसन्धान–बीजमाह– **पञ्चम्यन्तत्वे** इति। नामार्थयोस्तादात्म्येनान्वये नाम्नोः समानविभक्ति–कत्वप्रतिसन्धानस्य तन्त्रत्वादिति भावः। **कस्यचिदिति**, अत्रैव न्याये यथा शक्तः पदत्वादिति पदत्वज्ञाप्यशक्तिमद्दृष्टान्तकमुदाहरणं पञ्चम्यन्तं सम्भवतीत्याशयः। **पूर्ववदिति**–उदाहरणान्यत्वप्रवेशेनेत्यर्थः। **अत्र चेति**, पञ्चम्युत्तरसार्थकपदाघटितत्वे सति पञ्चमीघटितत्वं वा वाच्यमित्याशयः। पञ्चम्यादेरित्यादिपदाभ्यां सप्तम्यास्त्रादेशाद्युपग्रहः नये त्वित्यनेनास्वरसः सूचितः, तथाहि पञ्चम्यन्तादेव तसिलं विधाय तसिलन्तस्य तद्धितान्तत्वेन प्रतिपदिकसंज्ञायां 'सुपो धातुप्रातिपदिकयोरिति' पञ्चमी लुप्यते, न तु तसिलः पञ्चम्यादेशत्वं तथा सति भ्यसादेशे तसिले परे सर्वेभ्य इत्यत्रेव सर्वत इत्यत्राप्येकारप्रसंगात् स्त्रीलिंगसर्वशब्दात्परतस्तसिलि सर्वत इति प्रयोगानापत्तेः, सर्वनाम्नो वृत्तिमात्रे पुंवद्भावे विभक्तिमुपजीव्याप्रवृत्तेर्भवतु वा तसिल् पञ्चम्यादेशः, तथापि अर्थवद्भागस्य हेतुपञ्चम्यन्तत्वं प्रवेशनीयमितरथा तसिलन्तस्य कृत्तद्धित–समासाश्चेत्यनेन प्रातिपदिकसंज्ञायां सुबुत्पत्तौ सत्यामानुसन्धानिक– प्रथमान्तत्वेन पञ्चम्यन्तत्वादिति दिक्।

**पूर्ववदिति**, साध्यतावच्छेकावच्छिन्नविशेष्यक– प्रकृतहेतुत्वप्रकारक–बोधजनकपदघटित्वमित्यर्थः। तेन धूमादालोकवान् पर्वतो वह्निमान् धूमाद् आलोकाद् वह्निमतस्सधर्मा पर्वतो वह्निमान् धूमात्, धूमसमानकालीनवह्निमत्सधर्मा पर्वतो वह्निमान् धूमादित्यादौ प्रतिज्ञायान्नातिव्याप्तिः धूमाद्वह्निमतः सधर्मा पर्वतो वह्निमान् धूमादित्यादिकः प्रयोगो नाभ्युपेयत इति भावः। तस्माद्वह्निमानिति–निगमनेऽतिव्याप्तिवारणाय साध्याविषयक– ज्ञानजनकत्वं विशेषणं, तच्च वह्निमान् वह्निसामग्र्या इत्यत्राव्याप्तमतो नञो जनकपद–साकांक्षपदत्वेन व्याचष्टे– **इतरेत्यादि**। प्रतिज्ञासहकारेण हेत्ववयवस्यापि तथाविधबोधजनकत्वात्–सम्भववारणायेतर– नैरपेक्ष्येणेति। **साध्यञ्चेति**, तथा चेतरनैरपेक्ष्येण प्रकृतहेतुविशिष्ट– हेतुत्ववैशिष्ट्यावगाहिज्ञानाजनकत्वमात्रं प्रकृतहेतुविशिष्ट–हेतुत्ववैशिष्ट्यावगा– हिज्ञानाजनकत्वमात्रं प्रकृते प्रवेशनीयम्, पर्वतो धूमज्ञाप्यवह्निमान् धूमाद्वह्निसामग्र्या इत्यादावव्याप्तिवारणाय हेतुत्वे प्रकृतहेतुविशिष्टत्वं विशेषणमिति

भाव:। मूले प्रतिज्ञेत्यादि, प्रतिज्ञावाक्यजं यद्धीस्वरूपे जन्ये कारणाकांक्षानिवर्तकं ज्ञानं तज्जनकत्वं जनकान्तार्थ: धीस्साध्यविषयिणी कारणाकांक्षा प्रकृत–हेतुज्ञानजन्यत्वसन्देह:, तथा च प्रतिज्ञावाक्यजन्यं यत्साध्यज्ञानं हेतुज्ञानकारणकं न वेत्याकारकसंशयनिवर्त्तकं ज्ञानं तज्जनकत्वे सतीति निगर्व:। निगमनमपि तादृशसन्देहनिर्वर्त्तकमिति प्रतिज्ञाजन्यत्वं ज्ञाने विशेषणं प्रतिज्ञानिगमनाभ्यां सम्भूय जनितं समूहालम्बनमादाय निगमनेऽतिव्याप्तिवारणाय तादृशसन्देहनिर्त्तकत्वं विशेषणम्। तच्च सावधारणं तदन्यव्याप्ति–पक्षधर्मतादिसंशयानिवर्त्तकत्वं पर्यवसितमिति ज्ञाप्यसाध्यवान् पक्ष इति विषयताबहिर्भूतविषयताशून्यज्ञानजनकत्वं तु निष्कृष्टार्थ:। तच्च प्रतिज्ञायामपि गतमतो **हेतुविभक्तिमदिति**, प्रकृत–साध्यान्वितार्थकहेतुविभक्तिघटितत्वं तदर्थस्तेन धूमादालोकवान्, पर्वतो वह्निमानिति प्रतिज्ञाव्युदास:। उदासीनवाक्येऽतिव्याप्तिवारणाय **वाक्यत्वमिति**, न्यायावय–वत्वमित्यर्थ:। प्रकृतहेतुक–प्रकृतसाध्यक– प्रकृतपक्षविषयता– बहिर्भूतविषयता–शून्यज्ञानजनकत्वे सति प्रकृतसाध्यान्वितार्थक– हेतुविभक्ति– घटितन्यायावय–वत्वमिति समुदितार्थ:।

**दीधितौ** लक्षणद्वयान्तर्गतमनुमितिपरवाक्यत्वं व्याचष्टे**ऽवयवत्वमिति**। ननु लाक्षणिकपदवदनुमितिपरवाक्यत्वमित्येव साधूकृतं लाक्षणिकपदे पञ्चम्यन्तत्व–विशेषणेन प्रतिज्ञायां कस्यापि पदस्य लाक्षणिकत्वाभावाद् भावे वा प्रकृतपक्षान्वितप्रकृतसाध्यान्वितस्वार्थकत्वेन वक्ष्यमाणेन तद्वारणात्। निगमने च न लाक्षणिकं किमपि पदं सर्वनाम्नो लक्षणाविरहात्, पञ्चम्याश्च हेतुताशक्तेरानुशासनिकत्वादित्यत: पञ्चम्या एव हेतुत्वे निरूढलक्षणासूचकमनु–शासनमिति व्यवस्थापयति–**हेतुत्वादावित्यादिना** वदन्तीत्यन्तेन। लाक्षणिकीति हेतुताया गुरुत्वेन न तत्र शक्तिग्राहकमनुशासनमपि तु निरूढलक्षणाया इति भाव:। कस्य शक्यस्य सम्बन्ध: सूत्रेणानुशिष्यत इत्याकांक्षायामाह– **लाघवेनेत्यादि**, नायमखण्डस्यावधित्वादे: शक्यतावच्छेदकत्वेऽवधित्वे शक्तिग्राहकन्तु 'पञ्चमीविभक्ते' इति सूत्रमिति भाव:। वृक्षाद्विभजते न अस्मादित्यादौ नञर्थान्वयोपपादनायाहावधिमत्त्वेनेति, अवधित्वावधिमत्तात्वे द्वावप्यखण्डौ धर्माववधिरवधिमानित्यनुगताकारप्रतीतिसाक्षिकौ न तु तयोरेकशेषो विनिगमनाविरहादित्याशयेनाह–**द्रव्यनिष्ठमिति**। अतिरिक्त: सम्बन्धिद्वयात्।

अन्यदेतदिति, अवधितात्वादिकं तु अखण्ड एव धर्मो यल्लाघवेनातिरिक्तेऽनतिरिक्ते वावधित्वादौ शक्तिरित्यर्थः। व्यवहारः शाब्दबोधः, हेतुत्वादावित्यनुषज्यते। तथा चावधित्वरूपशक्यसम्बन्धो यदा न गृहीतस्तदा शक्तिग्रहो हेतुत्वादिशब्दजनको भ्रम एवेति, न ततो वस्तुसिद्धिरिति भावः।

मतान्तरमाह— **वृक्षादपैतीत्यादि**। विभागावच्छिन्नक्रियैव चेदपैतेः शक्या, तथा सत्याह—**पततीति**, विभागे शक्तिरिति, अपादाने पञ्चमीत्यनुशासनेन सिद्धेरिति शेषः। विभागस्य शक्यत्वे वृक्षान्न पततीत्यादौ जनकता सम्बन्धावच्छिन्न—प्रतियोगिताक—विभागाभाव एव नञा क्रियायां प्रतिपाद्येत, न चेदं सम्भवति, जनकत्वस्य वृत्त्यनियामकतया प्रतियोगितानवच्छेकत्वादिति वृक्षात्पततीत्यादौ विभागजनकत्वमेव पञ्चम्यर्थस्तत्रैव च गौरवाल्लक्षणैवेत्यस्वरसाद्वदन्तीत्युक्तम्। अत इति पक्षविशेषणसाध्यान्वितार्थकलाक्षणिक— पञ्चमीपदवतो निगमनस्य वारणायेत्यर्थः। इदमापाततः यद्यवधितात्वमवधिमत्तात्वञ्चाखण्डं तदा धूमाद्वह्निरित्यादौ ज्ञानं पञ्चम्याः शक्यमित्यपि सुवचम्, ज्ञाने जन्यतया धूमपदार्थस्य धूमज्ञानस्यान्वयो ज्ञानस्य पञ्चम्यर्थस्य तु विषयतया वह्नावित्यनेन सर्वसामञ्जस्यादिति ध्येयम्।

ननु पञ्चम्यन्तपदोपादानेऽपि न निगमनवारणं धूमशक्तस्य धूमज्ञान—लाक्षणिकस्य पञ्चम्यन्तस्य तच्छब्दस्य सत्त्वादित्यत आह—**तत्पदे चेति**, तत्पदस्य धूमज्ञाने शक्त्या द्वयोरुपस्थितयोः परस्परान्वयेन धूमज्ञानलाभाल्लक्षणा नावश्यकीति भावः। यदि च तेजस्वी उष्णादितिन्याये तस्मात्तेज—स्वीतिनिगमनेऽति—व्याप्तिरुष्णगुणावच्छिन्नस्य गुरुत्वात्तत्पदस्य उष्णगुण एव शक्तेरुष्णगुणवति लाक्षणिकत्वादिति विभाव्यते, तदा पञ्चम्यन्तलाक्षणिकेत्यनेन पञ्चम्य—र्थान्वितलक्ष्यार्थकत्वं वाच्यम्, न च पञ्चम्यर्थान्वयिज्ञाने तच्छब्दलक्ष्यमिति नातिव्याप्तिः। तस्मादित्याकारो यदि हेत्ववयवः स्यात्तदा तस्य लाक्षणिक—पञ्चम्यन्तत्वाभावादव्याप्तिः स्यादिति तन्निषेधति **पर्वत इत्यादि सम्प्रदायेति**, साधारणशब्देन कथायां हेतुप्रयोगो नास्ति, अविज्ञातार्थकनिग्रहस्थानापातादित्याशयः। **मिश्रास्तु** यदवच्छेदेन लाक्षणिकपदवत्तानियमस्तथावयवविभाजकोपाधिमत्त्वमुत्तर—दलार्थस्तावन्मात्रं लाक्षणिक—साध्यवाचकपदवत्यां प्रतिज्ञायामतिव्याप्तमतः पञ्चम्यन्तेति लाक्षणिकपदे विशेषणमित्याहुस्तन्मतैकदेशमुपन्यस्यति—**यत्त्वित्यादि**। **ज्ञानलक्षणेति** ज्ञानं लक्ष्यं, वह्निः शक्य इति तयोः परस्परान्वयाज्ज्ञायमानवह्निलाभः

ज्ञायमानत्वविशिष्टे वह्नौ वा लक्षणापदार्थैकदेशे ज्ञाने हेतुपञ्चम्यर्थान्वय इति भाव:।

पञ्चम्या इति, उक्तयुक्त्या हेतुत्वेऽपि पञ्चमी लाक्षणिकीति तस्या-ज्ञापकत्वे प्राचां ज्ञाप्यत्वे नव्यानां मतेन लक्षणयैवाभिमतार्थबोधे पदे लक्षणेति भाव:। ननु हेतुत्वे निरूढ़लक्षणाऽनुशासनिकी न ज्ञापकत्वे, न चाननुशासनविभक्तीनां वृत्तिरभ्युपेयते, यदाहुर्मिश्रा:, न च ज्ञापकहेतुत्वं पञ्चम्यर्थ: समभिव्याहृतज्ञानं प्रति हेतुत्वेन ज्ञापकत्वोपपत्ते: पञ्चम्यर्थभेदकल्पनाया बाधितत्वादिति। निषिद्धा चानुशासनिकी लक्षणा **महाभाष्यकारेण** 'सुपां कर्मादयोऽप्यर्था: संख्या चैव तथा तिङां, प्रसिद्धो नियमस्तत्र नियम: प्रकृतेषु चेति'। ये सुपां तिङां चार्था: कर्मादय:, ये च तिङां सुपां चार्था: संख्यादयस्तेषु कर्मादिष्वेव द्वितीयेति नियम: प्रसिद्ध:, अथवा कर्मादिषु द्वितीयादिरेवेत्येवं प्रकृतेषु नियम इति तदर्थ इति। सर्वथानुशासनिकपञ्चम्यन्तार्थान्वयानुरोधाद्वह्न्यादिपदे ज्ञाने लक्षणेत्यत आह– **अत एवेति**–पर्वतो वह्निमानिति विप्रतिपत्त्यर्थतुल्य: प्रतिज्ञार्थ: स्यान्न च ज्ञानलक्षणायां तथा शब्दार्थयोरेकाकारयो: पुनरनुसन्धानमावृत्तिरिति भाव:। ननु पर्वतो वह्निमान्नवेति विप्रतिपत्तिवाक्ये वह्निमत्पदार्थो वाकारार्थे विकल्पे सन्देहस्वरूपेऽन्वेति, स च विषयतया पर्वतेऽसमानाधिकरणयोरपि पदयोस्तुल्यविभक्तितनियमस्तु निपातविशेष–स्वाभाव्यादत एव पर्युदासनञि प्रतियोग्यनुयोगिपद– योस्तुल्यविभक्तिनियमो दृश्यते, न तु विप्रतिपत्तिवाक्ये पक्षे कोट्यो: संसर्गो भासते, परोक्षसंशयानभ्युपगमात्। अतएव वाकारव्यवकलित–तथाविधवाक्यान्न वाक्यार्थबोध:, भासतां वा पर्वते तादात्म्येन वह्निमान् तथापि प्रतिज्ञावाक्यमत्तुल्याकारबोधजनकं प्रतिज्ञावाक्याद्धि धूमवदनुयोगिकसंयोगेन वह्निमतस्तादात्म्येन पर्वतेऽन्वयो न तु शुद्ध–संयोगेनात एवायोगोलकं वह्निमद्धूमादित्यादिवाक्यं न प्रमाणं, प्रमाणञ्चायोगोलकं न धूमाद्वह्निमदिति धूमवद्वृत्तिसंयोगेन वह्निमतो भेदस्य नञा बोधनात्। अथ प्रथमं प्रतिज्ञया संयोगेन वह्निमत एव तादात्म्येनान्वयो यमादाय प्रतिज्ञायां विप्रतिपत्त्या वृत्तित्वव्यपदेशस्ततो हेतुसमभिव्याहारेण बोधे जायमाने हेतुमद्वृत्तिसंयोगादिना वह्निमानेव भासते यतोऽयोगोलकं वह्निमद्धूमादित्यादिको न प्रयोग इति चेत्, हन्त तर्हि प्राथमिकबोधे न ज्ञानलक्षणेति मिश्रै: कण्ठत उक्ते कथं विप्रतिपत्त्या वृत्तित्वहानि:, तदुक्तमालोके प्रतिज्ञालक्षणे हेत्वन्वयप्राक्कालिकमुख्यार्थबोधमादाय

लक्षणसंगमादीत्यत आह—**अतएवेति**, व्याचक्षते **वर्द्धमानोपाध्याया** इति शेष:।

**यथासम्भवमिति**—जन्यद्रव्यादौ हेतुत्वमुपपादकत्वं नित्ये तु ज्ञापकत्वं यत इति पञ्चम्या प्रतिपाद्यत इति व्याख्यातुराशय इत्यभिप्राय:। तथा च हेताविति सूत्रमेव ज्ञापकं, पञ्चम्यर्थशासकं ज्ञापके हेतुपदप्रतिपाद्यत्वं **वर्द्धमान**व्याख्यानसिद्धमिति भाव:। नन्वेवं हेतुत्वमुपपादकत्वमिति व्याख्यानादुत्पत्तिरपि पञ्चम्यर्थ: स्यादर्थसिद्धव्याख्यानमिदमिति यदि तर्हि ज्ञापकत्वव्याख्यानमपि तथेत्यत आह—**अतएवेति**। इदमप्यापाततः तद्गृहं वह्निमदितिवाक्येन प्रथमं शुद्धवह्निमत्तैव गृहे प्रत्याय्यते तदा वृत्तिसहकृतेन प्रश्नवाक्येन तु वह्निपदज्ञानलक्षणासहकृतेन किं हेतुज्ञान विषयवह्निमदित्युत्तरीता प्रत्येति, ततो धूमादित्युत्तरति। तेनोत्तरेण तद्गृहं वह्निमदिति पूर्ववाक्यावृत्तिसहकृतेन धूमज्ञानज्ञाप्यवह्निमदिदमितिप्रतिपाद्य: प्रत्येति। न च तद्गृहं वह्निमदितिवाक्येन यावन्न प्रतीतमभीष्टज्ञानविषयवस्तु तावद्बाधकमेव प्रश्नवाक्यसूचितमत्रचा भीष्ट—ज्ञापकतावच्छेदक— रूपावच्छिन्न— ज्ञान हेतुकज्ञानविषयवह्निमद् गृहं, पूर्ववाक्येन च वह्निमद्गृहमात्रं बोधितमित्यनवगतस्य हेतुत्वस्येव ज्ञानस्यापि बोधकं प्रश्नवाक्यमपेक्षते, तच्च पञ्चम्या एव ज्ञानार्थकत्वे युज्यत इति **शिरोमणेरा**शय इति वाच्यम्, पञ्चम्या ज्ञापकत्वेऽपि ज्ञानवह्नि — सम्बन्धस्य पूर्ववाक्यादलब्धस्याभीष्टज्ञानविषयस्य च प्रश्नवाक्येऽनुल्लेखेन तवाप्यसंगते:, हेतुमद्वृत्तिसंयोगेन वह्निमतो जिज्ञासितत्वेन पूर्ववाक्यादलब्धत्वेन च तस्यापि प्रश्नोल्लेखत्वापत्तेश्च।

अथ प्रतिज्ञावाक्यप्रश्नवाक्याभ्यां समभित्याहृत्य यन्न बोधयितुं शक्यते, स एव जिज्ञासित: प्रश्नवाक्येन विशिष्योल्लेखनीय:, संसर्गादिस्तु न तथेति चेद् एवं सति लिंगपञ्चमीसमभिव्याहृतसाध्यपदस्य ज्ञानलाक्षणिकत्वध्रौव्याद्धेतु— प्रश्नसममिव्याहृत— पूर्ववाक्येनावश्यलभ्यत्वान्न ज्ञानांशस्य प्रश्नवाक्ये कुत इत्यत्रोल्लेख इति किमनुपपन्नम्। अतएवात्र शत्रुर्नास्तीत्युक्ते कस्येति— प्रश्नश्चैत्रस्येत्युत्तरं च संगच्छते। अन्यत्र पूर्ववाक्येन शत्रुसामान्याभावो बोधित इत्यलब्धस्य शत्रुविशेषाभावस्य शत्रुविशेषाभाव—प्रश्नवाक्य उल्लेखप्रसंगात्। तस्मात्समभिव्याहारलभ्या न पृच्छ्य इति प्रष्टु: कौशलमनुपपन्नत्वेन ख्यापितमिति **महदवैदग्ध्यं दीधितिकृतामिति** दिक्।

हेतुर्न पञ्चम्यर्थोऽपि तु हेतुमानिति व्यवस्थापयति— **दाहो दहनादिति**—

अत्र यदि हेतुता पञ्चम्यर्थस्तदा तस्यावृत्तिनियामकसम्बन्धावच्छिन्नप्रतियोगिताकाभावो नञा बोध्यस्तदा दाहो दहनादित्यपि प्रयुज्येत दाहे दहनवृत्तिहेतुताभाव–सत्त्वानिरूपितत्वसंसर्गस्तु न वृत्त्यनियामकतया प्रतियोगितावच्छेदक इति भाव:। इदमप्यापातत: घटो, न पारिमाण्डल्यादित्यादौ जन्यतायां पारिमाण्डल्याभाव एव भासते पारिमाण्डल्यजन्यत्वस्याप्रसिद्धे:। तथा च वृत्त्यनियामकसम्बन्धो न प्रतियोगितावच्छेदक इति मते सर्वथैवानुपपत्तेरित्येषा दिक्।

ज्ञापकहेतुत्वं न पञ्चम्यर्थोऽपितु ज्ञाप्यहेतुमत्त्वमित्यत्र हेतुमाह–**जलं स्पर्शवदिति** रूपादित्यत्र ज्ञापकता यदि पञ्चम्यर्थस्तदा तस्याभाव: स्पर्शनबाधित इति न रूपादित्यपि प्रसज्येत, न गन्धादितिवत्। न च गन्धादित्यत्र गन्धवृत्ति–ज्ञापकताया एव निरूपितज्ञाप्यतासंसर्गावच्छिन्न – प्रतियोगिताकोऽभावो विषय इति वाच्यम्, वृत्त्यनियामकज्ञाप्यतासंसर्गस्य प्रतियोगितावच्छेद– कत्वासम्भवादिति भाव:। इदमप्यवद्यम्–पक्षधर्मताभ्रमसहकारेण जलीयस्पर्शस्यापि गन्धव्याप्यतया स्पर्शत्वावच्छेदेन वा गन्धव्याप्यत्वाभावस्यापि बोधयितुमशक्यत्वात्। अथ गन्धात्स्पर्शवानित्यत्र गन्धज्ञापकतानिरूपकस्पर्शवदभेदो जले नञा बोध्यत इति कथं ज्ञाप्यत्वाभावबोधकत्वमस्य शङ्क्यते? यदि वा हेत्वधिकरणपक्षवृत्तिसाध्य–निरूपित– विशेषणतासंसर्गेणैव हेतुज्ञाप्यत्वान्य इति तादृशविशिष्टसंसर्गासिद्ध्या जलं स्पर्शवद् गन्धादितिवाक्यस्य प्रामाण्यमित्युच्यते, तदापि तदा न गन्धादित्यत्र तादृशविशिष्ट– संसर्गाप्रसिद्ध्या तदवच्छिन्नप्रतियोगिताकाभावोऽपि कथं प्रसिद्ध्येत्। यदि वा पर्वतो वह्निमान् धूमादित्यादौ धूमपदस्य लक्ष्यस्य धूमज्ञानस्य पर्वतवृत्तिधूमज्ञानीया निरूपकतासंसर्गेण पञ्चम्यर्थज्ञापकतासंसर्गेण पञ्चम्यर्थ–ज्ञाप्यतायामन्वयोऽत एवायोगोलकं वह्निमद्धूमादित्यादिकमप्रमाणमिति मतं तदपि जलं स्पर्शवन्न गन्धादित्यादौ जलवृत्तिगन्धस्याप्रसिद्ध्या तादृशज्ञाप्यत्वाभावो नञा बोधयितुं न शक्यते, तस्माज्जलं स्पर्शवन्न गन्धादित्यादौ गन्धावदवृत्तिसमवायेन स्पर्शवतो भेदो जले प्रतीयत इति सारम्। तत्र ज्ञापकता ज्ञाप्यता वा पञ्चम्यर्थो भवतूभयथापि न किमपि हीयत इति ध्येयम्। अतएवास्वरसाद्वा स्थलान्तरमाह–नापि शब्दादिति, जलं स्पर्शवन्न शब्दादित्यत्र यद्यपि स्पर्शे शब्दज्ञाप्यत्वाभावो बाधितस्तथापि पञ्चम्यर्थज्ञाप्यत्वस्य हेतुज्ञापकताविशिष्ट–विशेषणता–सम्बन्धेनान्वयात्तादृशसंसर्गावच्छिन्नप्रतियोगिताक–शब्दज्ञाप्यत्वाभावो नञा

बोध्यते। ज्ञापकतायाः पञ्चम्यर्थतावादेऽपि हेतुव्यापकताविशिष्टनिरूपकतैव पञ्चम्यर्थसंसर्ग इति तस्य वृत्त्या नियामकतया प्रतियोगितावच्छेदकं दुरुपपादमिति भावः। लक्षणैवेति हेतुमत्त्वस्याखण्डतया तत्र शक्त्यभ्युपगमेऽपि ज्ञाप्यवे गुरौ लक्षणैवाभ्युपेतुमुचितेति, लाक्षणिकपदवत्त्वं निगमनेऽतिव्याप्तमतः पञ्चम्यन्त–त्वमुपादेयमितिभावः। अत्रापि ज्ञापकत्वं न हेत्वर्थः निरूपकतासंसर्गस्य वृत्त्यनियामकतया प्रतियोगितानवच्छेदकतया न गन्धादित्यादावनन्वयप्रसंगादिति पर्यवसितम्। तत्र वृत्त्यनियामकसंसर्गो न प्रतियोगितावच्छेदक इति किमाप्तवाक्याद् उत कुतश्चिदुपपत्तेरवधारितम्? आद्ये बहूनि महामुनिवचनानि गोः पदवदुल्लङ्घितवतो निबन्धकारजनजल्पजम्बाले मज्जनमुचितम्। द्वितीये केयमनुपपत्तिः? प्रतियोगितावच्छेदकतया वृत्त्यनियामकसंसर्गो नास्तीति प्रतीत्या नावगाहत इत्यनुभोवा वगाहत इत्यननुभवो वा? आद्योऽसिद्धः। द्वितीयस्तु संयोगादिवृत्तिनियामकसंसर्ग–साधारणः, नहि घटो नास्तीत्यनुभवानन्तरं संयोगं प्रतियोगितावच्छेदकत्वेन जानामीत्यनुव्यवसायो लोकानां सांसर्गिक– विषयत्वस्यायोग्यत्वात्। अथ घटो नास्तीति बुद्धिरेव काचित्संयोगेन घटवत्ताबुद्धिमेव प्रतिरुणद्धि न समवायेन। न च तत्र प्रकारविशेष्यसंसर्गकृतं वैचित्र्यमिति परिशेषात्संसर्गतावच्छेदककृतं, तदपि निष्पीड्यमानसंयोगावच्छिन्नत्व–मित्युपपत्तिरस्ति संयोगादेः प्रतियोगितावच्छेदकत्व–साधिकेति चेद् एतावता संयोगाच्छिन्नत्वं च प्रतियोगिता च परस्परवैशिष्ट्यापन्नं घटो नास्तीति प्रतीतिविषय इत्यप्रामाणिकमेव संयोगसंसर्गावछिन्नप्रतियोगिता इति त्वयाभिलप्यमानाखण्डाव्यक्तिः सामान्याभावविशेषस्वरूपातिरिक्तावस्यां प्रतीतो विषयो न तु समवायसंसर्गावच्छिन्नप्रतियोगितेत्यभिलप्यमानेत्येतावता संस्कृतवैचित्र्ये गौरवेणैव तद्वैचित्र्यसिद्धेः संयोगसंसर्गावच्छिन्नप्रतियोगिताकोऽभाव इति प्रतीतिव्यवहारौ तु संयोगेन विशिष्टबुद्धिः प्रतिबन्धकताज्ञानविषयमभावमालम्बते। कश्चायं व्यामोहो यद् वृत्त्यनियामकसंसर्गेण विशिष्टबुद्धित्वं काचिदप्यभावबुद्धिर्न प्रतिबध्नातीति। किञ्च विशेषणता विशेषणत्वेनैव नियामिका न तु हेतुव्यापकताविशिष्ट–विशेषणतात्वेनेति ताद्रूप्येण प्रतियोगितावच्छेदकोऽयं संसर्ग इति कस्य प्रमाणस्य गोचरः? तस्माद् धूमपदं धूमज्ञानस्य पञ्चमीहेतुताया वह्निपदं ज्ञायमानवह्नेर्ज्ञानवह्न्योर्वा बोधकं धूमज्ञानस्य भ्रमभिन्नज्ञानवृत्तिविशेषणतया हेतुतायां तस्याश्च पर्वतोद्देश्यक–वह्निविधेयकानु मितित्वावच्छिन्न–निरूपकताया ज्ञानेऽन्वयः।

अयोगोलकं वह्निमद् धूमादिन्धनाद्वेत्यादावयोगोलकोद्देश्यक–वह्नि–विधेयकानुमितित्वावच्छिन्ननिरूपकतया भ्रमभिन्नधूमज्ञानेन्धनादिवृत्तिहेतुताया बाधादप्रामाण्यं, तत्र न धूमान्न चेन्धनादित्यदि नञा च तादृशनिरूपकता संसर्गावच्छन्नप्रतियोगिताको भ्रमभिन्नज्ञानवृत्तिविशेषणतया धूमादिज्ञानविशिष्टाया हेतुताया अभावः प्रत्याय्यते। अयोगोलकं वह्निव्याप्यधूमव्याप्यधूमवद् वह्निव्याप्येन्धनवदित्यादिज्ञाने विद्यमानापि हेतुता व्याप्तिपक्षधर्मतांशे भ्रमात्मकज्ञानवृत्तिरेवेति नायोग्यमिदं वाक्यम्, न चानुशासनमुल्लंघ्य जन्यता ज्ञाप्यता वा पञ्चम्यर्थसूचिते पर्वतो वह्निमान् संयोगेन धूमान्न तु समवायेनेत्यादौ, संयोगसंसर्गकत्वं तृतीयान्तार्थो धूमपदार्थज्ञानान्वयी समवायसंसर्गत्वाभावो नञर्थः, तथा एतेन धूमपदार्थो धूम एव ज्ञानज्ञाप्त्वं पञ्चभ्यर्थ इत्यपि परास्तम्। संयोगे न धूमादित्यादौ पञ्चभ्यर्थे ज्ञाने। तृतीयार्थसंसर्गत्वस्यान्वयायोगात् सुबर्थयोः परस्परान्वयस्य शिरोमणिनैव घटो दण्डादिति प्रतिज्ञानिराकरणेन सूचितत्वादित्यादिकमूहनीयम्। ननु धूमादालोकवान् पर्वतो वह्निमान् धूमादिति प्रतिज्ञावारणाय साध्यान्वितार्थकत्वेन पञ्चमीविशेष्यत्वमत आह—**धूमाद्वह्निमत** इति। न च वह्नित्वावच्छेदेन धूमज्ञाप्यत्वे प्रतिज्ञयैव लब्धे हेतोराकांक्षानुदयादना कांक्षिताभिधाननिग्रहप्रसंगाद्धेत्ववयवावतारो न स्यादिति वाच्यम्, शुद्धवह्नित्वावच्छेदेन ज्ञापकाकांक्षायाः प्रतिज्ञया विच्छेदेऽपि पक्षवृत्तिवह्नित्वावच्छेदेन तदाकांक्षाया अविच्छेदात्। तत्परिपूरणसमर्थहेत्ववयवोत्थानात् धूमाद्वह्निमान् पर्वतो वह्निमान् धूमादित्यादावुद्देश्यतावच्छेदक–विधेययोरैक्यादेव वाक्यार्थबोधासम्भवान्न तादृशो न्याय इति भावः।

नन्वेवमपि प्रकृतपक्षे प्रकृतसाध्यान्वितार्थकत्वेन पञ्चमी विशेष्यताम्, किं साध्ये प्रकृतत्वेनेत्यत आह—**पर्वतो धूमाद्वह्निमानिति**। प्रकृतेत्यादि, प्रकृतपक्षबोधक–पदसाकांक्षप्रकृतसाध्यबोधकपदसाकांक्षा या पञ्चमी तदन्तलाक्षणिकपदवदवयवत्वं समुदायार्थः। अयं रक्तो जवाकुसुमत्वादित्यत्र तस्माद्रक्त इति निगमने पक्षान्वितसाध्यान्वितार्थिका प्रथमा तदन्तलाक्षणिकपदवति तत्रातिव्याप्तेः, पञ्चमीति जन्यत्वे, सति सत्त्वादित्यादौ चरमत्वपदं पाकात् पाचकाद् माणवकादित्यादौ ककारादिरेव हेतुज्ञाने लाक्षणिक इतरे वर्णास्तात्पर्यग्राहका इत्यभिसन्धिः। **प्रगल्भं** प्रत्यवस्थाप्य निरस्यति—**यत्त्वित्यादिना**। मिश्रास्तु पञ्चम्यन्तेति, अत्राद्याभावे प्रतिज्ञायां लाक्षणिकत्यागे निगमनेऽनुमितिपरत्वाविशेषणे उदासीनतादृशवाक्ये गतमतस्त्रित–

यगर्भमिदं लक्षणमिति व्याख्याय प्रतिज्ञाया ज्ञानलाक्षणिकसाध्यपदव्यवस्थापनावसरे न वा ब्राह्मणादिपदवदवयवान्तरवारणार्थं पञ्चम्यन्तपदमित्याशंक्य लाक्षणिक–पदवत्त्वनियमानुमितिपरवाक्यत्वस्यावश्यवाच्यत्वेन तत एव तादृशावयव–वारणसम्भवादिति समादधुस्तन्मतं निष्कृष्य प्रदर्शयति **केचित्त्वित्यादि**। तादृशमवयवतावच्छेदकं रूपान्तरमपरिचितमत आह–तादृशेति, न **प्रतीतीति**, तथा च मौलं लक्षणमसंभव्यव्याप्तं चेति भावः। यद्धर्मेत्यादि पञ्चम्यन्तेन पदेन यद्धर्मविशिष्टमुपस्थाप्यत इत्यर्थः। धूमपदस्य तज्ज्ञानलाक्षणिकत्वाभ्युपगमे तु ज्ञानेऽव्याप्तिः प्रदर्श्यत इति भावः। ननु यज्ज्ञानमुपस्थाप्यते तस्यैव व्याप्तिप्रदर्शनमत आह–**अन्यथेति**। अत्राहुः–पञ्चम्याम् इत्यशुद्धम् प्रातिपादिकयोर्लक्षणयैवोपपत्तौ न पञ्चम्यां लक्षणेति वाक्यमात्रस्य साम्प्रदायिकैरपि सुपठत्वात्। न च पदद्वयलक्षणया पदार्थोपस्थापकत्वं कल्पनीयमिति प्राचां गौरवं, बहुषु पदार्थेषु शक्त्या तथात्वं कल्पनीयमिति नव्यानामपि गौरवात्। यद्धर्मविशिष्ट इत्याद्यपि प्रलापमात्रं, प्रदर्शनादिति सम्प्रदाय एव श्रेयानिति दिक्।

मूले तथैवाकांक्षानिवृत्तेरिति तथैव हेतुपदेन ज्ञानलक्षणादेरयोग्यतया तत्र साध्यज्ञाप्यत्वान्वये ज्ञापकाकांक्षानिवृत्तेरित्यर्थः। पञ्चभिरवयवैः पञ्चविजातीय–वाक्यार्थबोधा जायन्ते। परम्परया परार्थपरामर्शकारणानीत्याशयवतां केषाञ्चि–द्धेत्ववयवलक्षणमाह–अनुमितीति, हेतुज्ञानकारणवृत्तिर्धूमादित्या– दिशब्दजन्यज्ञान–वृत्तिः प्रतिज्ञाजन्यज्ञानावृत्तिर्या जातिः तद्वज्ज्ञानजनकवाक्यत्वं हेतुत्वमित्यर्थः। हेतुप्रतिरूपकोदासीनवाक्यजन्ये ज्ञानेऽपि सुखविशेषादिजनकता– वच्छेदिका जातिः संभवतीति उदासीनवाक्येऽतिव्याप्तिवारणाय प्रथमं वृत्तित्वम्, तादृशशाब्द–बोधत्वमादाय वाक्यमात्रातिव्याप्तेर्वारणाय वृत्त्यन्तम्। तज्जातीय– शाब्दबोधजनक–पदार्थस्मरणहेत्वैकदेशेऽतिव्याप्तेर्वाक्यत्वमुपात्तम्, अन्य इत्यनेन पूर्वनिरस्तकल्प इति सूचितम्। तादृशजातौ मानाभावात् तत्र तस्यां जातौ प्रमाणं विद्यत इत्यपरेषाम्मत–मुपन्यस्यति **जातिं विनेत्यादि**। अनुमितिजन– कत्वम्। नन्वनुमिति–जनकपरामर्शजनकत्वं, न तु न्यायान्तर्गतधूमादित्यादि– वाक्यजन्यज्ञानत्वादिना परार्थपरामर्शे कारणत्वं स्यादत आह–**वाक्यविशेषेति** अन्वयेत्यादि। अन्वयव्याप्त्यभिधायको योऽवयव उदाहरणं तस्याभिधानं प्रथमवर्णस्तस्य प्रयोजकः प्रागभावस्तज्ज्ञानजनकत्वं कालविधया तदाश्रयत्वं, तेन तादृशोदारहणपूर्ववर्त्तित्वं,

तच्च प्रतिज्ञायामपि गतमतो हेत्वन्तेत्यादिना कथितहेत्ववयवलक्षणान्युपलक्ष्यन्ते, तेन यन्न्यायीयान्वय्युदाहरणपूर्ववर्त्तित्वं, तन्न्यायीयहेत्ववयवत्त्वं लभ्यते। अत्रोदाहरणं व्यतिरेकव्याप्तिगमकत्वेन विशेषणीयमतोऽन्वयव्यतिरेकिणि हेतौ नातिप्रसंग:। एवं व्यतिरेकिलक्षणेऽपि बोध्यम्। असौ पर्वतप्रभवो वारणत्वाद्, यो यो नागजात: स न गजो यथा अञ्जनपुण्डरीककुमुदादिरितीदमुदाहरणमन्वयतो व्यतिरेकतश्च व्याप्तिं गमयति, तथाहि यो नागजातो गजजातीय: स न गजो यथा अञ्जनादिदिग्गजा इत्यन्वयतो यो नागजातो न भवति, स गजो न भवति, यथा कज्जलपद्मकैरवादिरिति व्यतिरेकतो व्याप्तिरेकेनोदाहरणेन लभ्यते। तत्पूर्ववर्ती हेत्ववयवोऽन्वयव्यतिरेकेत्यादिना लक्षित:, समयबन्धवशादुभयविधमुदाहरणमपि क्वचिन्न्याये प्रयुज्यत इत्यपि वदन्ति। नोदाहरणविशेषप्रयुक्तं हेत्ववयवत्रैविध्यम् अपितु हेतोरन्वयित्वव्यतिरेकित्वप्रयुक्तं द्वैविध्यमेवेत्याशयेनाह–**पक्षेत्यादि**। **पक्षमत** इत्युपन्यस्य पक्षमत इति दृष्टान्तस्य साधुतया सन्न्यायत्वार्थम् अत्र केवलव्यतिरेकी हेतुर्नास्तीति भाव:। अथान्वयसहचारग्रहतदग्रह–स्वरूपदशाद्वैविध्यप्रयुक्त–हेत्ववयवद्वैविध्यमित्यभि– प्रायेण निर्वक्ति–**अनुमितीत्यादि**– अजनकान्तेनावयवत्वं हेत्वित्यादिना हेत्ववयवत्वं लभ्यते, तेन प्रतीतसाध्यसामानाधिकरण्यक–हेतुबोधकहेत्ववयवत्वम्– अप्रतीतसाध्य– सहचारक–हेतुबोधकहेत्ववयवत्वम् अन्वयिहेत्ववयव– व्यतिरेकिहेत्ववयत्वं च पयर्वस्यति। **मीमांसकास्तु**, धूमहेतुकेऽपि न्याये धूमवत्त्वादिति प्रयोज्यं न तु धूमादितिन्यायहेतो: पक्षसंसर्गप्रतिपादनावश्यकतया मतुपा तद्विधानौचित्यात्। उपनयादिस्तु न न्याय:, अतएवायोगोलकं वह्निमद् धूमादितिवाक्यमप्रमाणमित्याहुस्तानुद्दिश्याह– **कथायामिति**। **व्यर्थत्वादिति**– मतुपा–भिसम्बन्धानेभिधानेऽपि तस्य पक्षान्वयो निराकांक्षत्वांदत: पक्षधर्मताप्रदर्शनार्थमुपनयो नामावयवान्तरमेवोचितम्। पक्षधर्म–हेतुकहेत्ववयवस्याप्रामाण्यन्तु प्रागुपपादितमिति भाव:। यत्र धूमसम्बन्धस्य हेतुत्वमभिप्रेतं तत्र धूमवत्त्वादिति प्रयोज्यमेव, परन्तु यो धूमवत्त्वावान् इत्यादिकमत्रोदाहरणं, न तु धूमवानिति। अप्येवम् **अपार्थकमिति**, अभिमतबोधौपयिकाकांक्षारहितमित्यर्थ:। विभक्त्यन्तावरुद्धस्येत्युपलक्षणं, पञ्चमीप्रकृत्यनुपस्थापितस्येत्यपि द्रष्टव्यम्। **विशिष्टहेतुत्वान्वयादिति**– सामान्यवत्त्वे सतीत्यादौ त्वपदस्य ज्ञाने लक्षणा, तत्र वाक्यार्थस्य पदान्तरसप्तम्यन्तार्थविशिष्टस्यैवान्वयो नीलो घटो नास्ति चैत्रस्य पुत्रो नास्तीत्यादौ तथा दर्शनात्। भवतु वा

त्वपदमेव, तादृशविशिष्टज्ञानलाक्षणिकं पदान्तर तात्पर्यग्राहकं, तादृशज्ञानस्य च विशेषणतया हेतुतायामन्वयात्, पञ्चम्यर्थेन सप्तम्यर्थस्यान्वयविरहान्नानुपत्तिरिति भाव:। नन्वेवम् पदमात्रस्य लाक्षणिकत्वे इतरवर्णा व्यर्था इत्यत आह **तथैवेति**—तथैव समभिव्याहारेणैवान्त्यपदस्य विशिष्टज्ञाने व्युत्पत्तिर्निरूढ़लक्षणा नान्यर्थेत्यर्थ:। निरूढ़लक्षणायां त्वाजानिकोऽर्थावगम: प्रमाणमित्याह—**नहीति**।

**चिन्तामणि:**

**हेतावुक्ते कथमस्य गमकत्वमित्याकांक्षायां व्याप्तिपक्षधर्मतयो रुपदर्शनप्राप्तौ व्याप्ते: प्राथम्यात्तत्प्रदर्शनायोदाहरणम्। तत्रानुमितिहेतुलिंग—परामर्शपरवाक्यजन्यज्ञानजनक— व्याप्यत्वाभिमतवन्निष्ठनियतव्यापकत्वाभिमतसम्बन्धबोधजनकशब्दत्वमुदारहणत्वम्। सामान्यलक्षणे साध्यसाधनसम्बन्धबोधजनकत्वं, साध्यसाधनाभावसम्बन्धबोधनजकत्वञ्च विशेषलक्षणद्वयम्। न्यायावयवदृष्टान्तवचनमुदाहरणमिति तु न। दृष्टान्तप्रयोगस्य सामयिकत्वेनासार्वत्रिकत्वात्, यो यो धूमवान् सोऽग्नि—मानित्येव व्याप्ति: प्रतीते:। नापि प्रकृतानुमितिहेतुलिंग— परामर्शपर—वाक्यजन्यज्ञानविषयव्याप्त्युपनायकं वचनं तद् उपनयातिव्याप्ते:। अतएवोपनयाभिधानप्रयोजकजिज्ञासाजनकवाक्यमुदाहरणम्। एतदेवान्वय—व्यतिरेकव्याप्ति— विषयकत्वविशेषितं विशेषलक्षणद्वयमित्यन्ये। अत्र च व्यभिचारवारणाय वीप्सामाहु:। यंत्र च सामानाधिकरण्यादेव व्याप्तिस्तत्र न वीप्सा। केवलान्वयिन्यभेदानुमाने च वीप्सायामपि व्यभिचारतादवस्थ्यमिति तु वयम्। वीप्सा तु यत्पदे, न तु तत्पदेऽपि। विरूपोपस्थितयोरपि तत्पदेन परामर्शबुद्धिस्थवाचकत्वादिति न व्युत्पत्तिविरोध:। यथा ''यद्यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्म'' इत्यत्र। इदं च साध्यसाधनोभयाश्रयविकलानु—पदर्शितान्वय—विपरीतोपदर्शितान्वयानुपदर्शित—व्यतिरेकविपरीतो—पदर्शितव्यतिरेक— भेदाभासरूपमिति।**

*।। इति तत्त्वचिन्तामणावुदाहरणग्रन्थ:।।*

**उदाहरणानन्तरं भवतु व्याप्ति— स्तथापि व्याप्तं किं पक्षे वर्तते न वेत्याकाङ्क्षायां भवतु व्याप्तस्य पक्षधर्मत्वप्रदर्शनायोपनय:।**

तत्रानुमितिकारण– तृतीयलिंगपरामर्श– बोधकावयवत्वम्। व्यापकाभावे प्रतियोगिमत्पक्षबोध– कावयवत्वञ्च विशेषलक्षणद्वयम्। उदाहरणान्त एव प्रयोग इति न वाच्यम्, तृतीयलिंगपरामर्शस्य व्याप्तिपक्ष– धर्मतावगाहिनोऽवयवान्तरादलाभात्, तदनभ्युपगमेऽपि पक्षधर्मताया अलाभाद् न तु हेतुवचनादेव तदवगमः। तस्य को हेतुरित्याकांक्षायां प्रवृत्तत्वेन हेतुस्वरूपोपस्थापकस्यातत्परत्वात्। वादिवाक्यादेवाक्षेप इति चेन्न, तदर्थस्यासिद्धत्वेन अनाक्षेपकत्वात्, अन्यथा प्रतिज्ञावाक्यादेव सर्वापेक्षे अवयवान्तरविलयात्। प्रतिपाद्यानां स्वत एव तदवगम इति चेन्न, तेषां व्युत्पन्नाव्युत्पन्नतया सर्वत्र तंदसम्भवात् प्रतिपादकेन स्वव्यापारस्य निर्वाहयितुमुचितत्वाच्च, अन्यथा अवयवान्तरेऽप्येवं प्रसंगादिति तत्त्वचिन्तामणावुपनयग्रन्थः।

उपनयानन्तरं निगमनम्। तच्चानुमितिहेतुलिंगपरामर्शप्रयोजक– शाब्दज्ञानकारणव्याप्तिपक्षधर्मताधीप्रयुक्तसाध्यधीजनकवाक्यम्। न च व्याप्तिपक्षधर्मतयोश्चतुर्भिरिवावयवैः पर्याप्तेः किं तेनेति वाच्यम्, अबाधितासत्प्रतिपक्षितत्वयोरलाभे चतुर्णामप्यपर्यवसानात्। अथाभिधाना– भिधेययोः व्याप्तिपक्षधर्मतावल्लिंगप्रतिपादनादेव पर्यवसानेन अवय– वान्तराणां निराकांक्षत्वम्। विपरीतशंकानिवृत्तेरपि तत एव लाभाद्, अन्यथा निगमनेनापि तद्वारणात्। नहि तद्विशेषदर्शनमनादृत्यैव तन्निवर्तकम्। सिद्धनिर्देशतया वारयतीति चेन्न, मात्राभिधानात्। साध्यत्वानुपस्थितौ तस्मादिति हेतुविभक्त्यनन्वयप्रसंगाच्चेति चेन्न, व्याप्तिपक्षधर्मताज्ञानेऽपि बाधसत्प्रतिपक्षबुद्धेः साध्यज्ञानेनानुत्पत्तिदर्शनात्, तदभावाबोधने समीहितानिर्वाहात्। अथ बाधादिविरहस्य प्रयोजकत्वं न तु तद्बोधस्य मानाभावादसिद्धेश्चेति किमर्थं बाधादिविरहे बोधनीय इति चेन्न, यदवगमे सति यन्न भवति तत्तदभावज्ञानसाध्यमिति व्याप्तेः। न चानन्वयः, तस्मादित्यन्वयबलादेव हेत्वनाकांक्षितत्वलक्षणसिद्धत्वज्ञानात् न त्वन्वयात्प्राक्। इह केचिद् यथा तस्मादिति सर्वनाम्नो हेतोः परामर्शः पूर्वोक्ताशेषरूपलाभाय, तथा साध्यांशस्यापि, तथेति सर्वनाम्ना सिद्धस्थल

इव विरोधादिवारणाय युक्त इत्याहुः, तन्न, तथेति स्वरूपे, प्रकारे, सादृश्ये वा? आद्ये तथा चायमिति प्रक्रमात्तथेति हेतुमानित्यर्थः स्यात्। तथा चानन्वयः। नहि हेतुमत्त्वादेव हेतुमत्त्वमित्यन्वितम्। न द्वितीयः, सामान्येन पक्षस्याप्यन्वयव्याप्तौ प्रवेशात्, तत्प्रकारान्वयः तत्रैवेत्यनन्वयात्। अतएव न तृतीयोऽपि, अभेदानुमाने च अन्वयिनि तस्मात्तथेति सादृश्यान्वयाभावात्। बहूनां च प्रक्रमे विशेष्यानन्वयाद् वादिवाक्ये च योग्यतान्वयेऽतिप्रसंगात्, तस्मादित्यत्र तु हेतुविभक्त्यर्थानन्वयादेव नियमः। तस्मादनित्य इत्यभिधाने च विशिष्य सिद्धान्तादवगम्यते। पूर्व—साध्यतयोक्तस्य समर्थहेतुसम्बन्धेन पुनरुत्कीर्त्तनात्। अन्यथा तद्वैयर्थ्यात्। संशयप्रयोजनादयस्त्ववयवलक्षणाभावादेव नावयवाः, किन्तु न्यायांगतया न्यायान्तर्गतत्वेनोपयुज्यन्त इति नाधिक्यम्। कण्टकोद्धारस्य च सार्वत्रिकत्वं समयविशेषोपयोगित्वादिति।

*इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणावनुमानपरिच्छेदे अवयवग्रन्थस्सम्पूर्णः।*

—०००—

**दीधिति:—**

इतरान्वितस्वार्थबोधकन्यायावयवत्वम्, अन्वयव्याप्ति— बोधकत्वं व्यतिरेकव्याप्तिबोधकत्वं च विशेषलक्षणम्। इतरोपस्थापितार्थ— विशेषणकस्वार्थबोधजनकन्यायावयवत्वम्, स्वार्थविशेष्यकेतरार्थान्वयबोधो न्यायावयवत्वं चोपनयत्वम्। अवयवार्थविशेष्यकस्वार्थबोधजनकन्यायावयवत्वं निगमनत्वम्। हेत्वर्थश्च न प्रतिज्ञार्थे विशेषणत्वेनान्वेति, किन्तु तदेकदेशार्थे इत्युक्तप्रायम्।

इति श्रीमन्महामहोपाध्याय—महाचार्य—तार्किकशिरोमणिरघुनाथकवि विरचितायां तत्त्वचिन्तामणिव्याख्यायामनुमानदीधित्यपराख्याया—

**मवयवग्रन्थ: सम्पूर्ण:।**

**दीधितिविद्योत:**

हेत्वर्थोदाहरणार्थयो: संगतिमाह— **हेतावुक्त इति**। कथं केनोपपादकेन आकांक्षा जिज्ञासा तथा हेत्ववयवान्तरोदाहरणाभिधानप्रयोजकहेत्वर्थगमकत्वोपपादकं किमिति जिज्ञासा तज्जनकज्ञानविषय उपपादकत्वस्वरूपोत्पाद्यातो गमकत्वव्याप्त्यो: संगतिरिति भाव:। लाघवादत्रैवोदाहरणोपनययोरपि संगतिं प्रदर्शयति—**व्याप्तीत्यादि**, प्राथम्यात् प्रथमजिज्ञासितत्वात् तथा चावसरसंगति: सूचिता। अनुमितीति जनकान्तस्य न्यायावयवत्वमर्थस्तेनोदासीनतादृशवाक्ये व्यावृत्ति:। व्याप्यत्वं व्यापकतानिरूपकत्वं, तेन यद्धर्मविशिष्टनिरूपिताया यद्धर्मावच्छिन्नाया व्यापकताया ज्ञानं प्रकृतलिङ्ग— प्रकृतसाध्यकानुमित्यौपयिकं तद्धर्मविशिष्टवति तद्धर्मविशिष्टवैशिष्ट्यबोध— कन्यायावयवत्वमित्यर्थ:। अनुमित्यौपयिकी च व्यापकताबुद्धिऽर्द्वेधा, साध्यतावच्छेदकविशिष्टे हेतुतावच्छेदकावच्छिन्नव्यापकतामवगाहमाना, हेत्वभा— वत्वा वच्छेदेन साध्याभावव्यापकत्वावगाहिनी च। एवं च हेतुमति साध्यवत्त्वावगाहिनो यो धूमवान् स वह्निमानित्यस्य साध्यभाववति हेत्वभावावगाहिनो यो न वह्निमान् स न धूमवानित्यस्य चोदाहरणस्योपसंग्रह:।

नन्वेवमपि गन्धवती रूपवती गन्धादित्यत्र प्रतिज्ञायामतिव्याप्ति:, व्याप्यत्वाभिमतवदुद्देशेन व्यापकत्वाभिमताविधायकत्वात्। न च सर्वनामोपस्थितत्वं व्याप्यत्वाभिमतविशेषणम्, तावतापीयं रूपवतीत्यादौ गन्धवत इदमा परामर्शेऽति—

व्याप्तितादवस्थ्यात्। यथा च हेतोः पक्षतावच्छेदकत्वेऽप्युपनयः सम्भवति तथा प्रतिपादितमधस्तादिति। अतएव नियतपदोपादानात्तेन व्याप्यत्वाभिमतवदुद्देश्यतानिरूपितव्यापकविधेयताकबोधजनकत्वव्यभिचार्यवयवतावच्छेदकरूपशून्यावयवत्वमित्यर्थः पर्यवस्यतीति दिक्।

**न्यायेति**, न्यायावयवत्वे सति दृष्टन्तवचनमित्यर्थः। **असार्वत्रिकत्वादिति**–तथा च दृष्टान्तविनाकृतोदाहरणाव्याप्तिरिति भावः। **व्याप्तिप्रतीतेरिति**–इदमुपरिष्टात्प्रस्तावयिष्यते।

**उपनय** इति– निगमने चेत्यर्थ इति शेषः। **उपनयाभिधानेति**, उपनयाभिधान प्रयोजकत्वमुपनयपूर्वकत्वं, जिज्ञासाजनकत्वं हेत्ववयवोत्तरत्वम्। विशेषलक्षणे व्याप्तिविषयकबोधजनकत्वमुदाहरणावयवस्य सन्दिग्धमित्यस्वरसोऽन्य इत्युक्त्वा सूचितः। अत्र चेत्यादि, वीप्सितयच्छब्दसमभिव्याहृततच्छब्देन वीप्सितेन यावतां धूमवतामुपस्थितौ तत्र वह्निविधानाद्धूमसमानाधिकरणे कुत्रापि वह्निविरहशंका नोदेतीतिव्यभिचारशंकाविघटनाय वीप्सोपादानम् विघटितायां व्यभिचारशंकायामुदाहरणोपदिष्टसहचारान्मनसा व्याप्तिग्रहः सूपपद इति भावः। यत्र च स्वत एव व्यभिचारशंकाविरहस्तत्र वीप्सा नोपदेया, यथा केवलान्वयित्वेन गृहीते वस्तुनि साध्ये यो घटः स प्रमेय इति घटभिन्नभेदे साध्ये घटत्वादिति हेतौ च यो घटः स घटभिन्न इत्येवोदाहरणं प्रयोज्यम् हेतुमति घटे घटभेदासन्देहस्य स्वरसत एवानुत्पादादित्याह – यत्रेत्यादिनाऽभेदानुमाने चेत्यन्तेन। वीप्सायामपीति ग्रामो ग्रामो रमणीय इत्यादौ ग्रामत्वे ग्रामे वा रमणीयव्याप्यत्वं न पदार्थो, न वा वाक्यार्थ इति कथं शाब्दबोधगोचरः। न च द्वितीयग्रामादिशब्दस्य व्याप्तिरर्थः, प्रमाणाभावात्। 'नित्यवीप्सयोरिति' सूत्रे व्याप्तुमिच्छा वीप्सेति व्युत्पत्त्या व्याप्तिबोधनेच्छायां यद्द्विर्वचनप्रयोगोऽनुशिष्यते, न तु व्याप्तिर्द्विर्वचनार्थ इति सूत्रार्थस्तदा सति "नित्यव्याप्त्यो" रित्येव मुनिः सूत्रयेत्, द्विर्वचनस्थले व्याप्तिबोधस्तु मानसः द्वितीयशब्दप्रयोजनत्वेन व्याप्तिबुद्धाववगतायां मनसा तदुपस्थितं भवति। न मूर्त्तं मूर्त्तं रूपवदित्यादिवाक्यस्यापि प्रामाण्यप्रसंगः, द्विर्वचनप्रयोगज्ञानाप्रामाण्ये द्विर्वचनस्यासाधुत्वेन तस्याप्रामाण्यव्यवहारादत एव क्रोधादावपि व्यंग्ये यत्रामन्त्रितस्य द्विर्वचनं विधीयते तत्र क्रोधादि न पदार्थः, किन्तु मानसस्य वैयञ्जनिकबोधस्य विषय इति तदप्रामाण्यादक्रुद्धे वक्तरि तदसाधुत्वव्यपदेशः। साधुत्वं चार्जुनार्जुन,

सात्यके–सात्यके इत्यादौ क्रुद्धेऽश्वत्थाम्नि। नहि क्रुद्धे वक्तरि वक्तेति बोधो व्यञ्जनां विना सम्भवति, वचनस्य कर्त्तुः क्रोधस्य चापदार्थत्वात्, न च व्यभिचारशंकावारणाय वीप्सा इति युक्तम्, वीप्सितशब्देन यावतां ग्रामाणामुपस्थितौ तत्र रमणीयत्वसम्बन्धग्रहेऽपि रमणीयभिन्ने ग्रामत्वसन्देहस्य ग्रामत्ववत्येव वा तत्सामानाधिकरण्येन रमणीयत्वाभावसन्देहस्य च दुर्वारत्वात्। न च द्विर्वचनव्युत्पत्तिवैचित्र्याद् ग्रामत्वरमणीयत्वयोर्व्याप्यव्यापकसंसर्गेणान्वयः स्वीक्रिय–तामिति वाक्यार्थो व्याप्तिरितिवाच्यम् एवं सत्याचार्यमते व्यतिरेक्युदाहरणप्रयोगानुपपत्तेः यो यो न वह्निमान् स न धूमवानित्यत्र हि तच्छब्दोपस्थितौ वह्न्यभाव एव व्यापकतासंसर्गेण धूमाभावेऽन्वेतुमर्हति। न च सा व्याप्तिरनुमितावुपयुज्यते। व्यतिरेकसहचारेणान्वयव्याप्तिग्रह एव तेषा– मनुमितिप्रयोजकः। तस्माद् द्विर्वचनं व्याप्तिबोधतात्पर्यमात्रग्राहकं, गृहीते च तात्पर्ये मनसा व्याप्तिग्रह इति सारम्। तथा च यद्योगप्राथम्ययोरेव तथाविधतात्पर्यव्यञ्जकयोः सत्त्वादलं वीप्सयेति **चिन्तामणिभावार्थः**। तथा च परायणं यद्योगप्राथम्याभ्यामेव व्याप्तौ लब्धायां च वीप्सावधारणे स्फुटार्थ इति अवधारणमिह वह्निमानेव धूमवानित्युदाहरणवादिनाम्मतेनेति **मिश्रानुसारी** पन्थाः।

**उपाध्यायानुसारिणस्तु** द्विर्वचनाद् व्याप्तेर्व्यापकताया बोधस्त्वावश्यकः, कोऽपि ग्रामो न रमणीय इति व्यभिचारबुद्धौ सत्यां ग्रामो–ग्रामो रमणीय इति वाक्यार्थबुद्ध्यनुदयात् मानसो वैयञ्जनिको व्यापकतागोचरो निश्चय इत्यसाम्प्रतम्। वीप्सितवाक्ये तदर्थतात्पर्यमेव व्यञ्जना, तस्यां गृहीतायामपि रमणीयत्वे ग्रामनिष्ठाभावप्रतियोगित्वतदभावयोर्द्वयोर्विशिष्टसामग्र्यां संशयात्मकस्यैव व्यापकताबोधस्योत्पत्तेर्न तु तात्पर्यग्रहस्य तदितरकोटिग्रहप्रतिबन्धकत्वं प्रामाणिकमत एव ग्रामाणामेकतमस्यारमणीयत्वे ग्रामो–ग्रामो रमणीय इति वाक्यस्याप्रामाण्यम्। प्रामाण्यञ्च ग्रामो रमणीयो नतु ग्रामो ग्राम इति वाक्यस्य। नित्यवीप्सयोरिति सनो नेच्छावाचकत्वमपि तून्मुखत्वे लक्षणा, श्वा मुमूर्षति, नदी कूलं पिपतिषतीतिवत्। तथा च ज्ञापनोन्मुखत्वे व्यापकतैकदेशे शक्तिरेवानेन प्रतिपाद्यते। ग्रामो, ग्राम इति समुदायात्मकमेकमेव पदमेकपदस्थाने द्विर्भावविधानात्, नरो नरेति क्षुभ्नादिगणान्तर्भावात्तस्य तु समुदायस्यात्यन्ताभावः प्रतियोगित्वं चार्थः।

यत्तु **मिश्रैरुक्तमादेशो** न शक्तिमान्, तेन स्मारितस्थानीति चिन्त्यं लकारादेशानां

तिबादीनामेकत्वादौ शक्तिसत्त्वाद् नहि लकार एकत्वादिवाचक: शत्रादेरपि तदवगमप्रसंगादादेशिन आदेशावयवस्य वा ग्रामशब्दस्यार्थो ग्रामो द्विर्भावार्थे–ऽत्यन्ताभावे स च प्रतियोगितायां, सा पुनरत्यन्ताभावे, स रमणीयत्वे पदार्थैकदेशेऽन्वेति। भवतु वाऽन्योऽन्याभावोऽत्यन्ताभावश्च द्विर्वचनार्थ: आदेशिग्राम–पदार्थ– विशेषितोऽन्योन्याभावो रमणीयत्वावच्छिन्नप्रतियोगितास्वरूपव्यधिकरण–सम्बन्धावच्छिन्न प्रतियोगिताकत्वसंसर्गेणात्यन्ताभावेऽन्वेति, स रमणीयपदार्थान्वयी गेहे–गेहेऽश्वा इत्यादौ गेहान्वितस्यान्योन्याऽभाव– स्याश्वत्वावच्छिन्नप्रतियोगिता–वच्छेदकतासंसर्गावच्छिन्नप्रतियोगिताकात्यन्ता– भावोऽश्वत्वावच्छेदेन ब्राह्मणो–ब्राह्मणोऽधीत इत्यादौ ब्राह्मणवृत्त्यन्योन्याभाव– स्याध्ययनकर्तृत्वावच्छिन्न–पप्रतियोगितावच्छेदकतासंसर्गावच्छिन्न–प्रतियोगितात्यन्ताभावेऽध्ययनकर्तृत्वे भासते। भवतु वाभावमात्रं द्विर्वचनार्थ:, उद्देश्यविधेययोश्च येन संसर्गेणान्वय–स्तत्संसर्गावच्छिन्नप्रतियोगितासंसर्गावच्छिन्नैव च प्रतियोगिता–द्विर्वचनार्थयो: परस्परान्वये संसर्गमर्यादया च भासते। तथा च ग्रामो–ग्रामो रमणीय इत्यत्र रमणीयग्रामयोस्तादात्म्येनैवेति ग्रामान्वितोऽभावस्तादात्म्य संसर्गावच्छिन्नप्रतियोगिता–संसर्गावच्छिन्नप्रतियोगिताकत्व– संसर्गेणैव द्वितीयाभावेऽन्वेति, ब्राह्मणो–ब्राह्मणोऽधीत इत्यादौ ब्राह्मणविशेषितोऽभाव: समवायसंसर्गावच्छिन्न–प्रतियोगितासंसर्गावच्छिन्नप्रतियोगिताकत्वसंसर्गेण द्वितीयाभावेऽन्वेति। विभक्त्युपनीतं वस्तु संसर्गतयापि भासते इति स्वीकरणीयमन्यथा गेहे गेहे अश्वा इत्यादौ सप्तम्यर्थसंसर्गावच्छिन्न–प्रतियोगितालाभाय व्युत्पत्त्यन्तरमाश्रयणीयमेकस्यैव ग्रामपदार्थस्य द्विधा विशेष्यतया विशेषणतया वान्वयो द्विर्वचनार्थस्यैकरूपावच्छिन्नस्य च परस्परान्वयो व्युत्पत्तिवैचित्र्यात्। एवञ्च धूमवान्–धूमवान् वह्निमानित्यादौ धूमवन्निष्ठाभावप्रतियोगिवह्निमान् धूमवानित्यन्वयबोधेऽतिव्याप्तिर्व्यापकता च विषय इति निराबाधं ब्राह्मणोऽधीते, न तु ब्राह्मण इत्यन्वयबोध:। इत्थञ्चोदाहरणवाक्ये वीप्सा आवश्यकी, अन्यथा व्याप्त्यवगमासम्भवात्। सा च यद्यपि तत्पद एवोचिता, यो धूमवानितिवाक्येन विहितस्य धूमवतस्तच्छब्देन परामर्शे स स वह्निमानिति द्विर्वचनेन व्यापकतायां बोधितायां धूमवान् धूमव्यापकवह्निमानित्यन्वय–बोधेनाभिमतबोधनिर्वाहात्, प्रयुज्यते च तच्छब्देन द्विर्वचनं महाकविभि: "यां यां प्रिय: प्रैक्षत कातराक्षीं सा सा ह्रिया नम्रमुखी बभूव" इत्यादौ प्रियकर्तृकप्रेक्षण–

कर्मककातराक्षीरूपस्य यच्छब्दघटित— वाक्येन बोधितस्य विशेष्यविशेषण— भावव्यत्यासेन तच्छब्दपरामृष्टस्य 'व्यापको ह्रीनम्रमुखीभाव' इत्यन्वय— बोधस्यान्यथोपपादयितुमशक्यत्वात्। यच्छब्दवीप्सा न वह्नेर्व्यापकताबोधौपयिकी, उद्देश्यपदवीप्सया विधेये तद्व्यापकतालाभेन यच्छब्दार्थपर्वतमहानसादिव्यापकताया धूमे लाभान्तु वह्नौ धूमव्यापकतायास्तथापि वीप्सा यत्पदेन तत्पदेऽपी— त्यादिमूलस्यायमर्थः, यच्छदेनोपस्थिते पर्वतमहानसादौ पर्वतादिव्यापक— धूमवत्तायां यच्छब्दद्वित्वघटितवाक्येन बोधितायामेकेनापि तच्छब्देन धूमवान्, व्यापकता च परामृश्यत इति तयोः परस्परान्वयेन धूमवन्निष्ठात्यन्ता— भावाप्रतियोगी वह्निः प्रत्येतुं शक्यत इति शब्दलाघावाय तच्छब्दवीप्सा नोपादेया। विरूपोस्थितयोरित्यप्यत एव संगच्छते। धूमवत्तायां व्यापकतायां च विभिन्नाभ्यां रूपाभ्यामुपस्थिताभ्यां द्वयोः परामर्शे बुद्धिस्थमात्रे तच्छब्दशक्तेरेतच्छब्दार्थयोः परस्परान्वयो व्युत्पत्तिसिद्धः। अतएव धूमत्वज्ञानत्वाभ्यां लाघवात्तच्छक्ति— मतस्तच्छब्दात् तस्मादित्यादौ धूमज्ञानलाभः। अतएव येन पच्यते तमानयेत्यादौ यच्छब्दघटितवाक्येनोपस्थितानां पाककृतिमदर्थव्यक्तीनां तच्छब्देन परामर्शे पाककर्तृव्यक्तिमायेत्यन्वयबोधः, अन्यथा यच्छब्दवाक्यार्थस्य व्यक्तिकर्तृकपाकस्य तदा परामर्शेऽनन्वयप्रसंगात्। यत्र च तच्छब्दे वीप्सा दृश्यते तत्र तच्छब्दद्विर्वचनस्यैव व्यापकत्वमर्थो यच्छब्दवीप्सा तु तत्र यच्छब्दोपात्तव्यापकत्वस्यैतच्छब्देन परामर्श इति यत्तदोर्नित्याभिसम्बन्धव्युत्पत्तिःसिद्धा।

नन्वेवं यो यो धूमवान् स वह्निमानित्यादौ तच्छब्देन यच्छब्दार्थमहानसादेः परामर्शे धूमवन्महानसनिष्ठाभावाप्रतियोगित्वमुदाहरणाल्लभ्यते, न तु धूमव्यापक— तात्वम्। यदि च यच्छब्दार्थमहानसादिपरिहारेण धर्मी धूमवत्त्वेन परामृश्यते, तदापि यो यः पचति स जानातीत्यादौ तदा पाककर्ता न परामृश्यते, यच्छब्दघटित— वाक्ये कृतिमद्वाचकपदाभावाद् वाक्यार्थपरामर्शे च पाककर्त्तृचैत्रादिव्यापकतैव लभ्यत इति चेत्, न, यच्छब्दप्रवृत्तिनिमित्तचैत्रत्वादिपरिहोरण पूर्ववाक्यार्थस्य पाककृतिमतस्तच्छब्देन परामर्शादनुपपत्त्यभावात् समवायेन कृतिमति तच्छब्दस्य शक्तिरेव। यदि च कृतित्वाद्यपेक्षया गौरवात् कृतिर्न शक्यतावच्छेदिकेत्युच्चे, तदा तत्र भवतु निरूढ़लक्षणा, एवं व्यापकत्वप्रकारको बोध उदाहरणादुपपद्यते। यदि च द्विर्वचनं व्यापकत्वार्थकं, तदा ग्रामो—ग्रामो रमणीय इत्यादौ

ग्रामत्वव्यापकरमणीय– तादात्म्येन ग्रामे रमणीयस्य, ब्राह्मणो ब्राह्मणोऽधीत इत्यादौ ब्राह्मणत्वव्यापकांध्ययनकृतिसमवायेन ब्राह्मणेऽध्ययनकृतेरन्वयः स्वीक्रियताम्। यदि च ग्रामो रमणीयो न ग्रामो–ग्राम इत्यादौ नञर्थान्वय उपपादयितुं शक्यते, इत्थं च यो यो धूमवानित्यनेन महानसाभिर्महानसव्यापक– धूमवानिति स वह्निमानित्यनेन धूमवान् धूमव्यापकवह्निमानिति च बोधो जन्यते तत्र 'यथा महानसमिति' वाक्ये यथा शब्देन प्रक्रान्तवाक्यविधेयौ धूमवह्नी परामृश्येते, तेन महानसं धूमवद्वह्निमदिति दृष्टान्तादन्वयबोधः। एतेन धूमवान् धूमव्यापकवह्निमानिति प्रक्रमे यथाऽयोगोलकमिति साधनविकलोऽपि दृष्टान्तः प्रसज्यते, नहि यथाशब्देन पूर्ववाक्य उद्देश्यतावच्छेदको धर्मः परामृश्यते। मुखमाह्लादकं यथा चन्द्र इत्यादौ मुखत्वपरामर्शेणायोग्यत्वप्रसंगादिति समाहितमिति प्राहुः। **मिश्रास्तु** सम्बन्धस्वरूपाया व्याप्तेर्हेतौ साध्ये वा प्रकारतया भानार्थं यत्र यत्र धूमस्तत्र तत्र बह्निरित्युदाहरणशरीरमित्याहुः।

साध्यसाधनोभयाधिकरणताविकलदृष्टान्तकं यथा यो यो धूमवान् सोऽग्निमान् यथा ह्रदस्तप्तायःपिण्डो वानुपदर्शितान्वयः, हेतौ साध्यान्वयो यत्र न प्रदर्शितः, यथा धूमादित्यनन्तरं य आलोकवान् स वह्निमानिति विपरीतोपदर्शितान्वयो हेतौ रूपान्तरेणोपदर्शितान्वयः, यथा यो ह्रदाद्यवृत्तिधर्मवान् स वह्निमानिति एवं व्यतिरेक्युदारहणाभासत्वमितिद्वयमपि द्रष्टव्यम्।

पूर्वमुदाहरणोपनययोरवसरसंगतिः सूचिता, सम्प्रति तूदाहरणार्थव्याप्त्या सहोपनयार्थव्याप्तिविशिष्टपक्षधर्मतायां एककार्यानुकूलत्वं सङ्गतिरित्याह– **उदाहरणान्तरमित्यादि** भवतु व्याप्तिरित्यन्तेन। व्याप्तिरुदाहरणादवगतेति सूचितम्। **व्याप्तिमिति**, व्याप्तेः सहकारि किमित्याकाङ्क्षायां व्याप्तिपक्षधर्मता– गोचरायामाकांक्षायामित्यर्थः। उदाहरणाद् व्याप्तौ ज्ञातायां तस्याः सहकारिणि स्मृते किमस्याः सहकारीति जिज्ञासयोपनयाभिधानात्तदन्तपराभिधानप्रयोजकजिज्ञासा– जनकज्ञानविषयो व्याप्तिसहकारित्वं संगतिरिति भावः। मिश्राणामपि व्याप्तिपक्षधर्मतायाः सहकारित्वप्रदर्शनमेतत्परमिति तज्ज्ञैः सह मन्त्रणीयम्। **अनुमितिजनकेति** प्रकृतसाध्यव्याप्यप्रकृतहेतुविशिष्टः प्रकृतपक्षावगाही च बोधो विवक्षितः। निगमनेन तु पक्षवृत्तितया हेतुर्बोध्यते न तु हेतुमत्तया पक्षः। यादृश–यादृशबोधजनकतयोपनयाः सम्प्रदायसिद्धास्तादृशविषयताबहिर्भूतविषयता–शून्यबोधजनकन्यायावयवत्वं

विवक्षितं, तेन वह्निव्याप्यधूमवानित्यनेन धूमे व्याप्तिवैशिष्ट्यं प्रतीयते। किन्तु व्याप्यतादात्म्यं पक्षे च धूमवैशिष्ट्यमपि तु धूमवदभेद इत्यसम्भव: समाहित:, समाहिता च निगमनातिव्याप्ति:। **तृतीयेति**, अलाभात् अजननात्, न तु मा जन्यतामवयवान्तरेण व्याप्तिविशिष्टपक्षधर्मताज्ञानम् तथाप्युदाहरणोपनीतव्याप्तिविषयको मानस एव परामर्शो भविष्यतीत्यत आह तदनभ्युपगमे वेति। अलाभादिति। तथा चोपनयाभावे पक्षधर्मतोपनायकाभावान्मानसोऽपि तथा परामर्शो दुर्लभ इति भाव:।

ननु धूमवत्त्वादिति हेत्ववयवे मतुपा पक्षधर्मतोच्यत इत्याशङ्का निषेधति-- **न चेति**, अतत्परत्वात् पक्षे हेतुसम्बन्धबोधकत्वात्। अतएव धूमादिति प्रयोज्यं, न तु धूमवत्त्वादिति प्रागुक्तं वादिवाक्यादिति वादिवाक्यादुपस्थिताद्धेतो: साध्यगमकत्वादित्यर्थ:। असिद्धत्वेनाप्रामाण्यज्ञानावलीढ़त्वेन। **अन्यथा** वादिवाक्यजन्यबुद्धौ, भ्रमत्वशङ्काविरहे सर्वाक्षेपे कृतकृत्यत्वे।

अत एव मानान्तराद् उपनयनिगमनयो: पदैकवाक्यतया सङ्गतिर्नापेक्ष्यते। समयबन्धादेव च पौर्वापर्यमित्याशयेन सिद्धं निर्दिशति--**उपनयान्तरमिति**। **अनुमितीति**, न्यायावयवत्वं कारणान्तस्यार्थ: साध्यधीजनकं साध्यधीज्ञानजनकं व्याप्तिपक्षधर्मताविशिष्टहेतुज्ञानहेतुकत्वेन साध्यज्ञानावगाहिबोधजनको न्यायावयव इति समुदितार्थ:। **पर्याप्तेरिति** साध्यहेतुव्याप्तिपक्षधर्मतानां परामर्शनीयानामुपनयादित्यर्थ: अबाधिता सत्प्रतिपक्षितत्वविषयको मानसो बोध: परार्थपरामर्श इत्युच्यते। स एव परार्थानुमितौ जनकस्तथाप्यबाधितत्वादेर्व्यञ्जकं निगमनमपेक्ष्यत इत्याशयेनाह **अबाधितेति**। नन्वनुमितिकारणज्ञानविषयतया दृष्टचरी व्याप्ति: पक्षधर्मता चेति तद्विषयक एव परार्थपरामर्शो गवेषणीयस्तदुभयञ्चावयवान्तरेणोपनीयत इति व्यर्थं निगमनमित्याशयेनाह--**अथेति**, अवयवान्तराणां निगमनातिरिक्तानामित्यर्थ इति **मिश्रानुसारिण:**।

वस्तुतस्तु **सौगतस्येयमाशंका**। अवयवान्तराणां प्रतिज्ञाहेतुनिगमनानाम्। ननु पर्वतो वह्निमान् न वेति शंकानिवर्तकत्वेन पक्षे साध्यवत्ताबोधिका प्रतिज्ञा निगमनेन चापेक्ष्यत इत्यत आह, **विपरीतेति**। अतएवोदाहरणोपनयजन्यवाक्यार्थाभ्यामेव पक्षे तद्वत्ताबुद्धेरिव तद्व्याप्यवत्ताबुद्धेरपि विपरीतशंकानिवर्तकत्वादिति भाव:। अप्रामाण्यशंका तु निगमनादिजन्यवाक्यार्थबुद्धावपि तुल्येत्याह

**अन्यथेति**। ननु निगमनादिजन्यवाक्यार्थबुद्धेः प्रतिबन्धकतायामप्रामाण्यशङ्का नोत्तेजिका इत्यत्राह **नहीति**। विशेषदर्शनं क्लृप्तप्रतिंबन्धकतावच्छेदकरूपं, तथा च क्लृप्तान्यरूपेण स्वतन्त्रप्रतिबन्धकतायां मानाभाव इति भावः। अभिधीयतां वा प्रतिज्ञात एव शङ्कानिवृत्तेर्निगमनन्तु सर्वथा व्यर्थमितिभावार्थे शङ्कते—**सिद्धेति** प्रतिज्ञासाध्यत्वेन वह्निम्बोधयत्यत एव तत्राप्रामाण्यशंकानिगमनं तु सिद्धत्वेनेति तस्मादप्रामाण्यशङ्काशून्यनिगमन—जन्यबोधाद्विपरीतशङ्कानिवृत्तिरित्याशयः। यद्वा प्रतिज्ञानिगमनयोर्द्वयोरपि शङ्कासार्थकत्वमाशङ्कते **सिद्धेति**। सिद्धनिर्देशं विना न शङ्कानिवृत्तिरिति निगमनाभिधानं सिद्धनिर्देशः स्वसाध्यतया प्राङ्निर्देशापेक्षीति प्रतिज्ञाभिधानमिति भावः।

किमिदं सिद्धत्वं यन्निगमनेनाभिधीयते? किं प्रमितत्वं तदत एव तत्र नाप्रामाण्यशङ्केति? किं ज्ञानानन्वयित्वेनाभिधानमेव सिद्धाभिधानम्? आद्ये स्वरूपेति प्रमितत्वपरिहारेणान्वयादित्यर्थः। अन्त्ये साध्यत्वेति—साध्यत्वानुपस्थितौ ज्ञानविषयत्वाग्रहे। अथ साध्यनिर्देशं विना नावयवान्तरावतार इति प्रतिज्ञासार्थक्यं पूर्वमुपपादितम् इदानीन्त्वबाधितत्वादिरप्यनुमितिजनकज्ञानविषय इति तद्बोधकं निगमनमपेक्ष्यत इत्याह—न **व्याप्तीत्यादिना**। सिद्धे र्निश्चयासम्भवादबाधितत्वादेः संशयसाधारणं ज्ञानं कारणमिति सर्वत्र निश्चयेऽपि न क्षतिरित्याशयेनाह— **नेत्यादि**। प्रतिज्ञापेक्षया निगमनस्य वैलक्षण्यमाह न चान्वय इत्यादिना, सिद्धत्वेन ज्ञानानन्वितेन। साध्यज्ञापकत्वे निगमने तस्मादित्यनन्वितमित्युक्ते तात्पर्यबाधपूर्वकं स्वतात्पर्यमाह— **तस्मादिति**। अवयवान्तरानपेक्षं यद्धेतुमत्तया साध्यं बोधयति तत्सिद्धत्वेन साध्यज्ञापकं, न च प्रतिज्ञा तथा, किन्तु निगमनमिति भावः। हेत्वनाकाङ्क्षत्वम् अवयवान्तरोपात्तहेत्वनाकांक्षत्वम्, हेत्ववयवानाकाङ्क्षत्वं वा तदेव लिङ्गत्वं सिद्धत्वाभिधानत्वं, ज्ञानाद्, अवधारणात्। निगमन इति शेषः अन्वयात्प्राक् प्रतिज्ञाया इति शेषः।

तस्मात् तथेति निगमनाकारवादिनां मतमुत्थापयति—**इह केचिदिति**। प्रसिद्ध—स्थल इवेति दृष्टान्त इत्यर्थः। यथा दृष्टान्ते यथाशब्देन धूमविशिष्ट एव वह्नि—रुपस्थाप्यते तथा निगमनस्य तथाशब्देनाप्यन्यथा धूमविरोधिसाध्यसिद्धावर्थान्तर—प्रसंगादितिभावः। स्वरूपे धूमवाद्वह्नित्वावच्छिन्ने प्रकारे नैयायिकाभिमतसादृश्ये, मीमांसकाभिमते सामान्येनेति तथापदोपात्तसादृश्यप्रतियोगितया उदाहरणवाक्य

एव भासते, स च पर्वतोऽपीति पर्वतभिन्नत्वे सति पर्वतवृत्तिधर्मवत्त्वं पर्वतेऽनन्वित–मित्यर्थ:। अत एवातिरिक्तसादृश्यस्य भेदनियतत्वादेव न तु नोदाहरणवाक्यार्थ–स्तथाशब्दोपात्तसादृश्यप्रतियोगी, किन्तु दृष्टान्तवाक्यार्थमात्रं, तथा च यथा महानसं तथा पर्वत इति सम्बन्ध इत्यत आह—**अभेदानुमाने** चेति। अयं घट एतद्घटाभिन्न एतद्घटवृत्तियावद्धर्मवत्त्वादित्यादौ केनाप्युदाहरणवाक्यर्थेन सह भेद: पक्षे नास्तीति भाव:। ननु भेदानुमाने व्यतिरेकेणोदाहरणं, तस्मान्न तथेति निगमनं च सूपपदमत आह **अन्वयिनीति**, गगनं प्रमेयं शब्दादित्यादावित्यर्थ:। अत्र व्यतिरेक्युदाहरण–प्रयोगासम्भवादन्वय्युदाहरणवाक्यार्थसादृश्यस्य पक्षेऽसम्भवाच्च निगमनानुपपत्तिरिति भाव:। अविज्ञातार्थो नाम निग्रहस्तथेति प्रयोगस्येत्याह **बहूनां चेति**। अथ निगमने सिद्धान्तवादतया प्रतिसंहिते प्रयोजनजिज्ञासायामबाधितत्वादि प्रतिपत्तितात्पर्य–कत्वमवसीयते। तदेव तात्पर्यं व्यञ्जनेति तत्सहकारादबाधितत्वादिगोचरो मानसो बोधस्तेन वाक्येन जन्यते। तात्पर्यस्वरूपव्यञ्जनाया एतावानेवोपयोगो यदितरकोटिभानप्रतिबन्धेन तन्निश्चयसम्पादनम्। तदुक्तं **निबन्धे**—उपसंहारस्यैवैष महिमा यद्विपरीतशंकानिवारणं नामेति। सिद्धान्तवादत्वं पुनरुक्तत्वं शब्दतोऽर्थतश्च ऐक्ये सत्येव संभवति, तथेत्युपसंहारे च न शब्दैक्यमित्यतोऽबाधितत्वव्यञ्ज–कत्वमुपपन्नं स्यादित्याशयेनाह **तस्मादनित्य** इति। सिद्धता सिद्धान्तवादत्वे निगमनस्येति शेष:। पूर्वप्रतिज्ञया साध्यतयाऽवयवान्तरोपात्तहेतुकाकांक्षतयाऽन्यथा प्रयोजनान्तराभावे निगमनेऽबाधितत्वादिप्रतिपत्तिप्रयोजनकत्वमवसीयत इति शेष:।

जरन्नैयायिकान्निरस्यति **संशयेत्यादि**। न्यायस्यावयवानाञ्च लक्षणं प्राङ् निर्दिष्टमिदानीं प्रतिज्ञादीनां लक्षणान्याह दीधितौ—**इतरेत्यादि**—उदाहरणवारणाय प्रथम– सत्यन्तं, स्वाघटकपदसाकांक्षपदघटितत्वं तदर्थ, उपनयादिवारणाय **स्वकीयमित्यादि**। स्वीयमितिपाठ: प्रामादिक:, स्वपरादे: प्रत्यये नित्यं कप्रत्यानुशासनात् स्वघटकपद—प्राग्वर्त्ति स्वघटकपदार्थमुख्यविशेष्यकबोधजनकत्वं द्वितीयसत्यन्तार्थ:। उपनयस्यापि निगमनघटक—प्राग्वर्तिपदार्थमुख्यविशेष्यकबोध–जनकत्वात् प्रथमपदविशेषणं स्वघटकेति निगमनस्यापि स्वप्राग्वर्ति उपनययेदंपदार्थ–मुख्यविशेष्यकबोधजनकत्वादन्त्यपदविशेषणं स्वघटकेति। इदं द्रव्यगुणान्यत्वे सति सत्त्वादित्यादि—हेत्ववयवस्यान्यत्वविशेष्यकबोधजनकस्य वारणाय विशेष्यतायां मुख्येति। अस्य द्वितीयसत्यन्तस्यानुयोगिनि स्वपदार्थप्रवेशादननुगमात् प्रतियोगिनि स्वपदनिवेशादनुगतकल्पं वैकल्पिकं पक्षान्तरमाह **अन्त्येत्यादिना** सति चेत्यन्तेन।

अत्रेतरेत्यादि सत्यन्तं पूर्ववदुदाहरणवारणाय धूमादिति हेत्ववयववारणायान्त्यवत्त्वे सतीति पदद्वयघटितत्वे सतीत्यर्थ:। इतरार्थान्वितस्वार्थबोधकपदद्वयघटितन्यायावयवत्वं निगमनेऽतिव्याप्तमत: स्वकीयेत्यादि। अत्रापि स्वघटकप्राग्वर्तिस्वघटक-पदार्थमुख्यविशेष्यकान्वयबोधजनकं यद्यत्तद्भिन्नत्वमर्थ:। उपनयस्थायंपदस्य निगमनप्राग्वर्तित्वात्तद्वारणाय प्रथमं स्वघटकेति, निगमनघटकपदप्राग्वर्त्युपन-यस्थायंपदस्य मुख्यविशेष्य कान्वयबोधजनक- निगमनेऽतिव्याप्तिवारणाय द्वितीयपदविशेषणं स्वघटकेति, जन्यत्वे सति सत्त्वादिति हेत्ववयववारणाय विशेष्यतायां मुख्येति, प्रतिज्ञाहेत्वोरित्यादिना द्वितीयसत्यन्तव्यावर्त्तनीया हेत्ववयवादय इति सूचितम्। न तूदाहरणस्येत्यनेन प्रथमसत्यन्तव्यावर्त्तनीयमुदाहरणमभिप्रेतं पदमिति। तथा च स्वघटकविभक्त्यन्तप्राग्वर्त्तिस्वघटकविभक्त्यर्थविशेष्यान्वय-बोधजनकत्वादि द्वितीयसत्यन्तार्थ:। तस्मान्नेतराणीत्यादिनिगमनवारणाय प्रथमविभक्त्यन्तेति साध्यैकदेशाप्रतिपादकत्वं तदर्थ:। तस्मादर्द्धपिप्ल्यादौ पिप्पल्य-र्धसादृश्यके स्वघटकविभक्त्यन्त- पिपल्यादिपदपूवर्तिपदार्थार्द्धादिविशेष्य-कान्वयबोधजनकनिगमनवारणाय द्वितीयविभक्त्यन्तेति तदादृतेन निगमनव्युदास इति।

परे तु तस्मान्नेतराणीति निगमनवारणाय स्वघटकपदप्राग्वर्त्ति-पदमव्ययभिन्नत्वेन विशेषणीयमथवा निपाता विभक्त्यन्ता एव न भवन्तीत्याहु: तन्न, स्वर्मनोरममित्यादिप्रतिज्ञायामतिव्याप्तिप्रसंगात्। तस्मादन्यतरेभ्य इत्यत्र निगमने तथाप्यतिव्याप्तितादवस्थात् न प्रतिज्ञार्थो मुख्यविशेष्य:।

ननु प्रथमं हेत्ववयवलक्षणमुपनयेऽतिव्याप्तं, तस्यापि पक्षान्वितस्वार्थ-बोधकं यन्निगमनं चरमपदं तदर्थे विशेष्यतयान्वितस्वार्थवाक्यार्थकत्वान्नह्यन्वयो विशेषणतयैव विवक्षित:, प्रमेयत्वमाधेयं प्रमेयत्वादित्यत्र प्रतिज्ञावारणाय स्वार्थपदमिति त्वयैव प्रतिज्ञैकदेशार्थस्यापि विशेष्यतयैवान्वये तत्रातिव्याप्त्ययोगात् तत्रत्यनिगमने तथाप्यतिव्याप्तेश्च। हेतुकृतपक्षान्वितेदंपदार्थविशेषणतयैव निगमनवाक्यार्थस्यान्वयादतो लक्षणान्तरमाह—**स्वार्थविशिष्टेति**, यदर्थविशिष्टवैशिष्ट्यबोधो न्यायजन्यो न्यायाघटकपदाजन्यो वा, स न्यायावयवो हेतुरित्यर्थ:। तेनोदासीनवाक्यसहकारेण निगमनादेरपि तादृशबोधजनकत्वेन क्षति: द्वितीयतृतीयलक्षणयोरपि विशिष्टवैशिष्ट्यबोधो न्यायजन्य एव विवक्षित:। **विशेषलक्षणमिति**, अन्वयव्यतिरेक्युदाहरणं नास्त्येवात एव नैकदोभयव्याप्त्युपन्यासोऽपीयुक्तं पूर्वमतेन,

तत्र द्वयोर्लक्षणयोरतिव्याप्तिस्तल्लक्षणाप्रदर्शने न्यूनता वेत्यभिमान:। इतरेत्यादि, इतरोपस्थापितार्थविशेषणतानिरूपित– स्वार्थमुख्यताकबोधजनकत्वमर्थस्तत्रैव विशेष्यविशेषणभावव्यत्यासेन द्वितीयं लक्षणम्। स्वार्थत्वं स्वप्रतिपाद्यत्वं, मुख्यविशेष्यतानिवेशान्न प्रतिज्ञायामतिव्याप्ति:, निगमनलक्षणेऽवयवार्थोऽवय–ववाक्यार्थ:, स्वार्थ: स्वजन्यप्रतीतौ मुख्यविशेष्य:। हेत्ववयवेऽतिव्याप्तिं: निरस्यति हेत्वर्थश्चेति।

न्यायावयवमणौ यो, दीधिति–दोषेण दर्शितो दोष:।
तस्योद्धरणेन मयि, प्रीयेत प्राकृतेतर: पुरुष:।।

इति महामहोपाध्याय गोकुलनाथविरचितस्तत्त्वचिन्तामण्यवयव–
दीधितिविद्योत:

।। समाप्त: ।।

